RASHTRIYA SANSKRIT SANSTHAN, NEW DELHI
(*Kendriya Sanskrit Vidyapeetha, Tirupati Series No. 42.*)



# PAKṢATĀ

*OF*

SRI GAṄGEŚOPĀDHYĀYA

with DĪDHITI of Sri Raghunāthaśiromaṇi

*AND*

DĪDHITI - PRAKĀŚIKĀ of Sri Gadādhara - Bhaṭṭācārya




KENDRIYA SANSKRIT VIDYAPEETHA
TIRUPATI
1985

RASHTRIYA SANSKRIT SANSTHAN, NEW DELHI
*(Kendriya Sanskrit Vidyapeetha, Tirupati Series No. 42.*

# PAKṢATĀ

*OF*

SRI GAṄGEŚOPĀDHYĀYA

with **DĪDHITI** of Sri Raghunāthaśiromaṇi

*AND*

DĪDHITI - PRAKĀŚIKĀ of Sri Gadādhara - Bhaṭṭācārya



KENDRIYA SANSKRIT VIDYAPEETHA
TIRUPATI
1985

*First Edition :* *1911*
*Second Edition :* *1930*
*Reprinted by Offset Process :* *1985*



*Price :* *Rs.*

*Published for the*
RASHTRIYA SANSKRIT SANSTHAN
MINISTRY OF EDUCATION
GOVERNMENT OF INDIA
NEW DELHI

*By*

Dr. N. S. RAMANUJA TATACHARYA
PRINCIPAL I/c
KENDRIYA SANSKRIT VIDYAPEETHA
TIRUPATI

Printed by N.R. Vijayaraghavan by Offset Process at Udhaya Printers, Madras-600033.

राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली
(केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला-संख्या ४२।

श्रीगङ्गेशोपाध्यायविरचिता

# पक्षता !

श्रीरघुनाथशिरोमणि विरचितया **दीधित्या**
श्रीगदाधरभट्टाचार्यकृतया **दीधितिप्रकाशिकया** च अलंकृता




केन्द्रीयसंस्कृतविद्यापीठम्
तिरुपतिः
१९८५

# पक्षता

## उपोद्घातः

व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः इत्यनुमितेः लक्षण-मुक्त्वा अनुमितिहेतुभूतज्ञानविषयीभूतव्याप्तिलक्षणं पूर्वपक्षसिद्धान्तरूपेण निरूप्य ततः पक्षधर्मतानिरूपणं प्रतिज्ञाय पक्षताश्रयवृत्तित्वरूपायाः पक्ष-धर्मतायाः पक्षताघटितत्वेन पक्षतायां विवादसद्भावेन तन्निरूपणे कृते तदाश्रयवृत्तित्वरूपा पक्षता सुगमेत्याशयेन पक्षतानिरूपणमत्र ग्रन्थे क्रियते मणिकारैः।

तत्र 'आदौ संदिग्धसाध्यधर्मत्वं पक्षत्वम्' इति प्राचीनमतमनूद्य साध्यसंशयरूपायाः पक्षताया विशेषणत्वम् उपलक्षणत्वं वा न संभवतीति प्रतिपाद्य साधकबाधकमानाभावस्य सिषाधयिषाया वा पक्षतात्वमिति मत-मनूद्य निरस्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षतेति सिद्धान्तितं मणौ ।

दीधितिकारैः मणिग्रन्थं यथावद् व्याख्याय यत्र अविरलक्रमेण सिषाधयिषासिद्धिपरामर्शानुमितयो भवन्ति तत्र अनुमित्यव्यवहितप्राक्क्षणे सिषाधयिषाविरहविशिष्टसिद्धेरेव सत्त्वेन तदभावरूपा पक्षता न निर्वह-तीत्याक्षेपमुद्भाव्य मणिस्थसिषाधयिषापदं सिषाधयिषायोग्यतापरम्, अतः सिषाधयिषायोग्यताविरहविशिष्टसिद्ध्यभावः पक्षतेति मिश्राणां व्याख्यान-मुपन्यस्य ततः "सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्ति-कानुमितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता" इति सार्व-भौमपरिष्कारमनूद्य तस्य बहुधा दूषणं विधाय तदनन्तरं "सिषाधयिषा विरहविशिष्टस्य सिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्याभावः पक्षता" इति उपाध्यायमतं निरस्य सिद्ध्युत्तरानुमितौ सिषाधयिषा हेतु-रस्त्वित्याक्षिप्य निराकृतम् ।

ततः पक्षता नानुमितिहेतुरिति प्राभाकराणां मतमुपन्यस्तम् ।

गदाधरभट्टाचार्यैश्च दीधितेः प्रतिपदव्याख्यान कुर्वद्भिः तत्र तत्र स्वमेधाविलासेन बहून् विचारान् प्रकटय्य पण्डितकुलं सुबहु उपकृतम् । अस्य ग्रन्थस्य यथावदध्ययनेन भावविशेषं कतिचिदेव विज्ञातुमीशते । 'पक्षता प्राणघातिनी' इति प्रथा अन्वर्था । विशेषतो दक्षिणापथे पठन-पाठनसंप्रदाये प्रथितस्यास्य ग्रन्थस्य पृथक्तया मुद्रणं बहुभ्यः संवत्सरेभ्यः पूर्वं काञ्चीपुर्यां सुदर्शनमुद्रणालये संपन्नम् । तस्याः प्रतयः अधुना अलभ्याः । अतः विद्यापीठेनानेन पुनर्मुद्रणं क्रियते । एतदर्थं स्वीकृति-दानेनानुगृहीतवद्भ्यः प्रथमप्रकाशकसुपुत्रेभ्यः श्री गाधि – कृष्णमाचार्य-स्वामिभ्यः कृतज्ञतां निवेदयामि । प्रकाशनसमितिद्वारानुमतिं प्रापय्य मुद्रणार्थद्रविणादिव्यवस्थां संपादितवतां राष्ट्रियसंस्कृतसंस्थाननिदेशकानां उपकारं सर्वदा स्मरिष्यामः । सम्यक् पुनर्मुद्रितवतां उदयप्रिण्टर्स् अधिकारिणां भगवान् वेंकटेश्वरो मङ्गलानि वितनोतु ।

तिरुपतिः
20-10-85

एन्. एस्. रामानुजताताचार्यः



श्रीरस्तु ।

श्रीहयग्रीवाय नमः ।

# शास्त्रमुक्तावली ।

## तत्त्वचिन्तामणौ

# पक्षता ।

—(*)—

## * व्याप्तिनिरूपणानन्तरं पक्षधर्मता निरूप्यते ।

[ दीधितिः । ]

अनुमितिलक्षणैककार्यानुकूलत्वसङ्गत्या व्याप्त्यनन्तरं पक्षधर्मतां निरूपयितुमाह— व्याप्ती ति ।

[गदाधरीयम् । ]

मूले व्याप्तिपक्षधर्मतयो स्सङ्गत्यप्रदर्शनेन न्यूनतां परिजिहीर्षुः तयोरेककार्यकारित्वरूपां सङ्गतिं प्रदर्शयन् व्याप्त्यनन्तर मित्यादिमूल मवतारयति- अनुमिती ति । अनुमितिलक्षणम्— अनुमितिस्वरूपं यत् एकं कार्यम् , तदनुकूलत्वसङ्गत्या— तत्प्रयोजकत्वरूपसङ्गत्या ; प्रयोजकत्वं च कारणतावच्छेदकस्यापीति व्याप्तिपक्षधर्मतयोः परामर्शनिष्ठ कारणतायामवच्छेदकत्वेनानुमित्यजनकत्वेपि न क्षतिः ।

यद्यपि पक्षताया न कारणतावच्छेदकघटकत्वम् , तामनन्तर्भाव्य पर्वतादिवृत्तित्वज्ञानत्वेनैवानुमितिजनकत्वात् ; तथापि पक्षताया अनुमितौ स्वातन्त्र्येण कारणतया तदुपलक्षितधर्मिवृत्तितायाः कारणतावच्छेदकतया तद्घटितविशिष्टस्यैककार्यानुकूलत्वमक्षतमेवेति ध्येयम् ।

निरूपयितु मिति । निरूपणम्— प्रतिपत्त्यनुकूलव्यापारः; एवंच पक्षधर्मताघटकपक्षतानिरूपणस्यापि पक्षधर्मताप्रतिपत्त्यनुकूलत्वेन तन्निरूपणमक्षतमेवेति मूले पक्षतानिरूपणेपि पक्षधर्मतां निरूपयितु मित्यस्य

* " व्याप्त्यनन्तर " मिति पाठे अनुपपत्तिर्गादाधर्यामुद्घाटितेति ध्येयम् ।

**तत्र न तावत्सन्दिग्धसाध्यधर्मत्वं पक्षत्वम्; सन्देहो हि न विशेषणम्; परामर्शपूर्वं लिङ्गदर्शनव्याप्तिस्मरणादिना तस्य नाशात् ।**

---

सन्दिग्धे ति ।

---

नाऽसङ्गतिः । पक्षे धर्मत्वं यस्या इति व्युत्पत्त्या पक्षताधर्मता पदं पक्षीयधर्मविशेषरूपपक्षतापरमिति केचित्; तच्चिन्त्यम्; तथात्वे लिखनसंक्षेपनिर्वन्धिनो दीधितिकारस्य "पक्षतां निरूपयितु" मित्यस्योपेक्षायां वीजाभावात् । व्याप्तीती ति । व्याप्तिनिरूपणानन्तर मिति मूलपाठाभिप्रायेण; "व्याप्त्यनन्तर" मिति पाठे च तत्र इकाराभावात् 'प्रत्यक्ष' त्याद्युपेक्ष्य प्रत्यक्षावित्यादिरीत्या प्रत्यक्षोपजीवकत्वा दिति ग्रन्थधारकस्य तथाविधलिखनस्याऽसङ्गत्यापत्तेः । तत्रेति मूले तत्पदं पक्षधर्मतापरम्, सप्तम्यर्थश्च घटकत्वम्; अन्वयश्चास्य पक्षत्व मित्यनेनेत्यवधेयम् । सन्दिग्धे त्यादिग्रन्थस्य सन्दिग्धः साध्यरूपो धर्मो यत्रेति व्युत्पत्त्या विषयतया साध्यीभूतधर्मसन्देहवत्त्वं तादृशसन्देह पर्यवसितं पक्षत्वमित्युक्तौ तत्र साध्ये धर्मत्वनिवेशनमफलम् । धर्मपद सार्थक्याय स्वस्मिन् सन्दिग्धं साध्यधर्मत्वं- बहुव्रीहिबलात्साध्यनिरूपित धार्मत्वपर्यवसितं पक्षत्वमित्युक्तौ साध्ये सन्दिग्धं धर्मत्वं यस्य तत्त्वं पक्षत्वमित्युक्तौ च साध्यनिरूपितधर्मित्वस्य पक्षधर्मत्वस्य वा यत्राप्रसिद्धिः तत्र वक्ष्यमाणानुपपत्तिप्रयोजकं तत् । एवं साध्यकोटिकसंशयस्य निवेशे साध्यं पक्षवृत्ति न वा? साध्यं पक्षनिष्ठात्यन्ताभावप्रतियोगि न वा? इत्यादि

[दी] यत्र साध्यस्य यादृशसम्बन्धावगाहिनिर्णयनिवर्त्यो य स्संशयः स तत्र तादृशसम्बन्धेन साध्यानुमितौ पक्षतेत्यर्थः । तेन न पक्षसाध्यविशेष्यकसंशयाननुगमः ।

---

संशयासंग्रहः; तादृशसंशयोपादाने च पक्षस्साध्यवा न्नवेत्यादि संशयादनुमित्यनुपपत्तिः, अतो धर्मत्वांशं परित्यज्य केवलान्वयिग्रन्थे मणिकृतैव वक्ष्यमाणं तथाविधसकलसंशयानुगमप्रकार दर्शयति- यत्रे ति । यत्र- यद्धर्मावच्छिन्ने; सप्तम्यर्थो निर्णयान्वयि विशेष्यित्वम् । साध्यस्य- साध्यतावच्छेदकावच्छिन्नस्य; षष्ठ्यर्थः प्रकारित्वन ; तस्यापि निर्णये ऽन्वयः । तत्र—तद्धर्मावच्छिन्ने; सप्तम्यर्थोऽनुमित्यन्वयि विशेष्यित्वम् । तादृशसम्बन्धेन साध्यानुमितौ— तादृशसंसर्गावच्छिन्नसाध्यतावच्छेद कावच्छिन्नविधेयताकानुमितौ । पक्षता— जनकीभूतेत्यर्थः, पक्षविशेष्यक साध्याभावविशिष्टबुद्धाविव साध्यधर्मिकपक्षावृत्तित्वपक्षनिष्ठाभावप्रतियोगित्व विशिष्टबुद्धावपि पक्षस्साध्यवानिति निश्चयस्य प्राचीनमते प्रतिबन्ध कत्वा त्साध्यं पक्षवृत्ति न वेत्यादिसंशयसंग्रहः; एवंच शुद्धपर्वतत्वावच्छि न्नोद्देश्यतानिरूपितशुद्धसंयोगसम्बन्धावच्छिन्नशुद्धवह्नित्वावच्छिन्नविधेयता - कानुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंस र्गावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताकसं - शयो हेतुरिति पर्यवसितम् । तादृशनिश्चयप्रतिबद्धत्वस्य यथाश्रुते घटादि विषयकसमूहालम्बनात्मक वह्न्यादिनिश्चयप्रतिबध्यघटादिसंशयसाधारणत्वा त्तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकताप्रवेशः । अवच्छिन्नत्वं च अन्यून वृत्तित्वम् ; न तु स्वरूपसम्बन्धविशेषः; तेन वह्निसामान्याभावविशिष्ट बुद्धौ महानसीयत्वादिविषयतामनन्तर्भाव्य वह्निमान् महानसीयवह्नि मानित्यादिसकलज्ञानसाधारणवह्नित्वावच्छिन्नवत्तानिश्चयत्वेनैव प्रतिबन्ध कताकल्पनात् 'महानसीयवह्निमान् वह्निसामान्याभाववान्वा पक्ष'

इत्याकारकसंशयं प्रति महानसीयवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वे नाऽप्रतिबन्धकत्वेपि न तथाविधसंशयस्य महानसीयवह्नित्वावच्छिन्न साध्यकानुमितौ पक्षतात्वानुपपत्तिः न वा महानसीयवह्न्यभावादिविशिष्ट बुद्धिप्रतिबन्धकतावच्छेदककोटौ वह्नित्वावच्छिन्नप्रकारत्वादेर्निविष्टत्वेपि वह्नि मानित्याद्यनुमितौ महानसीयवह्निमान् न वा पक्ष इत्यादिसंशयस्य पक्षतात्वापत्तिः; इत्थं च आहार्यस्य भ्रमत्वज्ञानास्कन्दितस्य च निश्च यस्याप्रतिबन्धकतया ऽनाहार्यत्वम् भ्रमत्वज्ञानानास्कन्दितत्वं च निश्चय विशेषणं देयम्; अतो न तथाविधनिश्चयत्वान्यूनवृत्तिप्रतिबन्धकत्वाप्रसिद्धिः. पर्वतो वह्निमानित्यादेः कस्यापि ज्ञानस्य धर्मान्तरावच्छिन्नविशेष्यकान्य संसर्गकान्यधर्मावच्छिन्नप्रकारकनिश्चयसाधारणसंयोगसंसर्गक वह्नित्वाद्य- वच्छिन्नप्रकारकनिश्चयत्वान्यूनवृत्तिप्रतिबन्धकतावत्त्वं न सम्भवतीति प्रकृत पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वादेः प्रकारताविशेषणत्वम्. उप नीतभानात्मकबाधनिश्चयस्यापि साध्यवत्तानिश्चयसाम...[illegible] भ्रमत्वज्ञानास्कन्दितस्य च तस्यानुमित्यविरोधितया, तथाविध साध्यकशाया मनुमित्यापत्तिः, अतस्संशयत्वनिवेशनम् । नच पक्षसाध्यविशेष्यकसंशयसा धारणस्य अनतिप्रसक्तस्य संशयत्वस्य दुर्वचतया पुनरननुगमतादव स्थ्यमिति वाच्यम् , बाधनिश्चयनिवर्तनीयत्वस्यैवात्र संशयपदेन विवक्ष णीयत्वात । केवलान्वयिसाध्यके च साध्ये पक्षनिष्ठाभावप्रतियोगित्वनिश्चय एव सुलभो बाधः, एकविधबाधोपादानेनैव विविधसंशयानुगमसम्भवा त्तदननुगमो न दोषाय; अनुगमस्यापि कथंचित्सम्भवाच्च ।

यत्तु पक्षसाध्यवैशिष्ट्यावगाहित्वं संशयपदेन विवक्षितमिति ना ननुगमः; साध्यं पक्षवृत्ति न वेति साध्यविशेष्यकसंशयस्यापि तथात्वा दिति; तदसत् ;– तथा सति साध्यपक्षवैशिष्ट्यानवगाहिनः साध्यं पक्षनिष्ठाभावप्रतियोगि न वेति संशयस्यासंग्रहात । नच केवलान्वयिस्थले

साध्यं पक्षवृत्ति न वेत्यादिसंशयादेव अनुमित्युत्पत्त्या तथाविधसंशया संग्रहो न दोषायेति वाच्यम् ; प्रमेयत्वं पक्षनिष्ठात्यन्ताभावप्रतियोगि न वेत्यादिसंशयस्य केवलान्वयिग्रन्थे मणिकृतैव संगृहीततया तद्विरोधात् ।

वस्तुतस्तु– तादात्म्येन प्रमेयपक्षकवाच्यसाध्यकस्थले तादृशसंशया प्रसिद्धिः;- तादात्म्यसम्बन्धेन पक्षसम्बन्धित्वाभावरूपकोट्यप्रसिद्धेः । नच साध्ये पक्षनिष्ठाभावप्रतियोगित्वसंशयस्य पक्षतात्वेप्युक्तस्थले पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितेरुद्देश्यत्वे पक्षतावच्छेदकावच्छेदेन वर्तमानभेदप्रतियोगित्व कोटिकसंशयस्यैव साध्यवत्तानिर्णयप्रतिबध्यतया पक्षतात्वमङ्गीकर्तव्यम् ; तच्च न सम्भवति, प्रमेयत्वावच्छेदेन वर्तमानभेदाप्रसिद्ध्या कोट्यप्रसिद्धेरिति वाच्यम् ;— घटपटोभयत्वावच्छिन्नभेदस्य प्रतियोगिन्यपि प्रत्येकं वर्तमानतया तादृशभेदस्यैव पक्षतावच्छेदकावच्छेदेन वर्तमानस्य प्रसिद्धेः । तत्र पक्षतावच्छेदकावच्छिन्नवृत्तिकाभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वोभयत्वावच्छिन्नतदभावकोटिकसंशयस्य पक्षतात्वोपगमाच्च । एवमप्रसिद्धसाध्यकव्यतिरेक्यनुमानस्थले साध्यवैशिष्ट्यावगाहिसंशयानुपपत्तेस्तत्र साध्यात्मकाभावप्रतियोगिनि पक्षवृत्तित्वादिसंशयस्यैव पक्षतात्वस्योपगन्तव्यतया संशयपदेन साध्यपक्षवैशिष्ट्यावगाहित्वानिवेशनासम्भव इति ।

अथ वह्नित्वाद्यवसाध्यकस्थले महानसीयवह्नित्वाद्यवच्छिन्नसाध्यकस्थले च 'वह्निमान् वा पक्ष' इत्येतादृशसंशयस्य पक्षतात्वप्रसङ्गः, साध्यवत्तानिश्चयनिवर्त्यत्वात् । न च सिद्धसाधनस्थले अनुमितिवारणमेव पक्षताहेतुत्वकल्पनप्रयोजनम् , एवंचोक्तसंशयस्य पक्षतात्वोपगमेपि सिद्धिदशायामनुमित्यापत्त्यसम्भवात्तस्य पक्षतात्वमिष्टमेवेति वाच्यम् ; साध्यतावच्छेदकावच्छिन्नसाध्यतदभावान्यतरस्मिन् पक्षसम्बन्धावगाहिसन्देहस्यैव प्राचीनैः पक्षतात्वोपगमात् ; अन्यथा बाधसाधारणरूपेण पक्षतात्वोप-

गमेपि सिद्धिकालेनुमितिवारणसम्भवाद्बाधवारकसंशयत्वनिवेशस्य निष्प्रयो जनकत्वापत्तेः । न च तादृशसंशयस्य वह्निव्याप्याद्यभाववत्तानिश्चयरूप बाधप्रतिबद्ध्यतया नातिव्याप्तिरिति वाच्यम् ; वह्निव्याप्याभावाभाव वान् पर्वतः पर्वतो वह्निमान्नवेति संशयस्य तादृशबाधनिश्चयप्रतिबध्य तया तावतापि तद्वारणासम्भवात् ।

यत्तु–प्रकृतसाध्यतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नप्रति बध्यतानिवेशा न्नोक्तातिप्रसङ्गः, वह्न्यभावविशिष्टज्ञानत्वाद्यवच्छिन्नाया वह्निव्याप्यवत्तानिश्चय प्रतिबध्यताया अवच्छेदककोटौ वह्निव्याप्य त्वावच्छिन्नविषयताया अनन्तर्भावादिति, तन्न;– वह्न्यभावादिसाध्यक स्थले वह्निमान्नवेत्यादिसंशयासंग्रहप्रसङ्गात्, वह्निविशिष्टबुद्धित्वाद्यवच्छि न्नाया वह्न्यभावादिनिश्चयप्रतिबध्यताया अवच्छेदकगर्भे वह्न्यभाव त्वाद्यवच्छिन्नविषयताया अनिवेशात्; यत्र च वह्निव्याप्यत्वाद्यवच्छिन्न स्यैव पक्षत्वं साध्यत्वं च तत्र वह्निव्याप्यो वह्निमान्नवेति संशय वारणस्याशक्यत्वात् ।

यत्तु— साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयताघटितधर्मा वच्छिन्नत्वेन प्रतिबध्यताया विशेषणीयतया वह्निव्याप्यवत्ताज्ञानं प्रति वह्न्यभावादिनिश्चयत्वेनाप्रतिबन्धकतया तद्विषयताया स्साध्यवत्ताज्ञान प्रतिबन्धकतावच्छेदकत्वविरहेण नातिप्रसङ्ग इति; तदपि न;— ताव तापि महानसीयवह्निसाध्यकस्थले महानसीयवह्न्यभावाभाववान् पर्वतो वह्निमान्नवेति संशयवारणासम्भवात् ।

अत्रोच्यते;— संशयत्वं स्वनिष्ठविषयताघटितधर्मावच्छिन्नप्रति बन्धकतानिरूपितप्रतिबध्यताशालित्वम; ज्ञानभेदेन विषयताभेदानभ्युप गमात्संशयनिष्ठवह्निमत्पर्वतनिरूपितविषयताया अपि प्रत्येकं निश्चय

वृत्तित्वात्प्रतिबन्धकतावच्छेदकघटकत्वोपपत्तिः; वह्न्यादिसाध्यकस्थले वह्न्यभाववान् पर्वतो घटवान्नवेति संशयस्य तादृशधर्माक्रान्तस्य साध्यवत्तानिश्चयप्रतिबद्ध्यस्य च वारणाय साध्यवत्तानिश्चयप्रतिबद्ध्यतावच्छेदकावच्छिन्नत्वेन निरूपितसंशयत्वघटकप्रतिबध्यता निवेशनीया; घटादिमत्ताज्ञानत्वावच्छिन्नप्रतिबध्यताया अतथात्वान्नातिप्रसङ्गः. तत्र वह्न्यभाववान्नवेति संशयस्य पक्षतात्वमिष्टमेव, तस्य वह्निः पक्षनिष्ठाभावप्रतियोगी न वेति संशयसमशीलत्वात् । स्वनिष्ठविषयतायां बाधप्रतिबध्यतावच्छेदकत्वं निवेशनीयम्, तेन वह्निव्याप्यसाध्यकस्थले वह्निमान्न वा पक्ष इत्येतादृशसंशयस्य व्युदासः; तत्र वह्निव्याप्याभावाभावत्वेन व्याप्यस्य पृथग्भानेपि संशयत्वघटकीभूतस्वनिष्ठवह्निमत्पक्षविषयताया वह्निव्याप्याभावनिश्चयप्रतिबध्यतावच्छेदकत्वविरहात् । एवं च वह्न्यभाववान् पर्वतो घटवान्नवेत्यादौ व्यावृत्त्यसम्भवेपि शुद्धवह्नित्वावच्छिन्नसाध्यकस्थले वह्न्यभाववान् पक्ष इत्येतादृशबाधनिश्चयप्रतिबध्यस्य महानसीयवह्निमान्न वा पक्ष इत्येतादृशसंशयस्य पक्षतात्ववारणाय साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वनिवेशनं सफलमिति ध्येयम्। एतेन अवच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकसामानाधिकरण्यमात्रेण कोटिद्वयावगाहिनो निश्चयस्यावच्छेदकावच्छेदेन साध्यादिमत्तानिश्चयप्रतिबध्यत्वेपि निरुक्तसंशयत्वाभावेन न पक्षतात्वमिति संक्षेपः ।

अथ अवच्छेदकावच्छेदेन कोटिमवगाहमानस्य कोटिद्वयसमुच्चयस्य पक्षतात्वापत्तिः, तस्याप्युक्तरूपाक्रान्तत्वात्; न च विरोधावगाहित्वनिवेशात्तद्वारणमिति वाच्यम्; कुत्रचित्किंचित्प्रतियोगिकविरोधभानस्य समुच्चयेप्यक्षतत्वात्; साध्यतदभावादिविरोधावगाहित्वस्य प्रत्येकं सकल

संशयसाधारण्यासम्भवादिति चेन्न; संयोगादेरव्याप्यवृत्तिताज्ञानदशायां तद्वत्त्वग्रहविषयीभूतधर्मिणि तदभावादिग्रहोत्पत्त्या तद्वत्ताज्ञानस्य तदभाववत्ताज्ञानप्रतिबन्धकतायां अव्याप्यवृत्तित्वज्ञानस्योत्तेजकतामपेक्ष्य व्याप्यवृत्तितावगाहित्वेनैव प्रतिबन्धकतोपेयते; व्याप्यवृत्तित्वञ्च अनवच्छिन्नाधारताकत्वम् , सर्वत्र प्रतिबन्धकज्ञाने तादृशाधारताया अन्ततः कोट्योस्संसर्गविधयैव भानमुपेयते; एवंच समुच्चयनिष्ठकोटिविषयता न विपरीतज्ञानप्रतिबन्धकतावच्छेदिका, व्याप्यवृत्तित्वविषयत्वानिरूपितत्वात् ; अत्र उक्तसंशयत्वनिरुक्तौ स्वपदेन समुच्चयोपादानासम्भवेन तस्य पक्षतात्वापत्तिविरहात् ।

अथ वा- स्वघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता या स्वनिरूपकतावच्छेदकधर्मावच्छिन्नानिरूपितविरोधविषयतानिरूपितप्रकारिता सामानाधिकारण्यसम्बन्धेन तद्विशिष्टप्रकारितैव संशयत्वम् ; तच्च समुच्चयव्यावृत्तम् , समुच्चये विरोधाभानेन कोटिद्वयविषयतयोर्विरोधविषयत्वानिरूपितत्वात् , संशयेचान्ततः कोट्योः संसर्गतयापि परस्परविरोधभानोपगमेन सकलसंशयसंग्रहः , यदंशे संशयत्वं तत्कोटिविरोधस्यैवोक्तरूपेणोपादानसम्भवात् न वस्त्वन्तरविरोधभानमादायातिप्रसङ्ग इति ।

केचित्— साध्यनिश्चयसाध्याभावनिश्चयप्रतिबध्यतावच्छेदकविशेष्यताशालित्वं समुदितार्थः; संशये च धर्मिणि उभयप्रकारतानिरूपितैकविलक्षणविषयता समुच्चयवैलक्षण्यायोपगम्यत इति तादृशविषयताया विभिन्नरूपेण उभयनिश्चयप्रतिबध्यतावच्छेदकतया नासम्भव इत्याहुः ; तच्चिन्त्यम् ।

[दी] न वा सम्बन्धान्तरेण सन्देहे निर्णीतसम्बन्धेन पक्षत्वम् , न वा तमःप्रभृतिषु

---

प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतदभावकोटिकज्ञानत्वादिकमुपेक्ष्य निरुक्तरूपेण संशयनिवेशनप्रयोजनं दर्शयति— **तेन न पक्षे** ति । पक्षविशेष्यकस्य पक्षस्साध्यवान्न वेत्यस्य साध्यविशेष्यकस्य साध्यं पक्षवृत्ति न वेत्यस्य संशयस्याननुगमः; तथा सति फलस्याविलक्षणतया व्यभिचारेण कारणता भज्यतेति भावः । इदमुपलक्षणम् ; साध्यवद्भेदादिकोटिकसंशयाननुगमोऽपि बोध्यः ।

विशिष्य सम्बन्धनिवेशप्रयोजनं दर्शयति— **न वे** ति । **सम्बन्धान्तरेण**— तत्सम्बन्धातिरिक्तसम्बन्धेन; **सन्देहे**— सन्देहदशायाम् ; **निर्णीतसम्बन्धेन**— पक्षांशे साध्यीयसंसर्गविधया तत्कालीननिर्णयविषयीभूततत्सम्बन्धेन । एतदनन्तरं "अनुमिता" विति पूरणीयम् । तत्सम्बन्धेन संशयासत्त्वेऽपि तत्सम्बन्धेन सिद्धिशून्यकाले इष्टापत्तिसम्भवा न्निर्णीते त्युक्तम् । सम्बन्धमनिवेश्य साध्यनिर्णयसामान्यनिवर्त्यत्वनिवेशेऽप्रसिद्धिप्रसङ्गः; यत्किञ्चिन्निर्णयनिवर्त्यत्वं यत्किञ्चित्संसर्गकनिश्चयसामान्यनिवर्त्यत्वं वा यदि निवेश्यते ? तदाऽयमतिप्रसङ्गो बोध्यः । धर्मत्वांशानिवेशनप्रयोजनमाह- **तमःप्रभृतिष्वि** ति । स्वधर्मत्वसंशयविषयसाध्यकत्वं पक्षत्वमित्युक्तौ धर्मत्वनिवेश्यवृत्तिसाध्यकघटादिपक्षकस्थले न पक्षतावैकल्यम् , घटादिसमवेतत्वस्य प्रसिद्ध्या गगनादौ तत्संशयसम्भवादिति तमःप्रभृतिपर्यन्तानुधावनम् ; तथा च साध्ये सम्बन्धान्तरेण पक्षवृत्तित्वसंशयदशायां निर्णीतसम्बन्धेनानुमितिवारणाय प्रकृतसाध्यतावच्छेदकसम्बन्धेन स्ववृत्तित्वसंशयस्यावश्यं निवेशनीयतया तमःप्रभृतिसमवेतत्वस्याप्रसिद्ध्या साध्ये पक्षवृत्तित्वसन्देहमादायापि न तत्र पक्षत्वोपपत्तिरिति

२

नाप्युपलक्षणम्; अव्यावर्तकत्वापत्तेः । नापि साधकबाधकमानाभावः, उभयाभावस्य प्रत्येकं सत्त्वेपि सत्त्वात् । नाप्यभावद्वयं तथा, बाधकमानाभावस्य व्यर्थत्वात् । ह्रदादेः पक्षत्वेपि बाधहेत्व सिद्ध्यादेरावश्यकत्वेनानुमित्यनुत्पादात्। नापि साधकमानाभावः; "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्या समानविषयकश्रवणानन्तरं मननबोधनात्, प्रत्यक्षदृष्टेप्यनुमानदर्शनात, एकलिङ्गावगतेपि लिंगान्तरेण तदनुमानाच्च। 'श्रोतव्य श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः' इति स्मरणात॥

---

[दी] समवायेनाकाशादिसाधने तद्वैकल्यम् । संशययोग्यतां निरस्यति- नापी ति । साधकबाधकमाने- सिद्धिबाधौ ।

---

भावः । स्वरूपसम्बन्धेन तमोवृत्तित्वस्य प्रसिद्ध्या तेन सम्बन्धेन अनुमितौ नानुपपत्तिः, अत स्समवायेने ति । पक्षे साध्यीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नधर्मितासंशयस्य पक्षतात्वे तमःप्रभृतिषु वृत्तिमत्साधने नानुपपत्तिः, अत आकाशादी ति । तद्वैकल्यम्- पक्षतावैकल्यम् ।

सन्देहोनुमितौ हेतुः? विशेषणतया पक्षधर्मताज्ञाननिष्ठायां तज्जनकतायां अवच्छेदकः? अथ वा उपलक्षणतया तादृशजनकतायामवच्छेदकः? तत्राद्यं पक्षद्वयं दूषयति- मूले सन्देह इति । विशेषणम्-अपेक्षणीयानुमित्यव्यवहितप्राक्सत्ताकं अनुमितिकारणं विशेषणविधया कारणतावच्छेदकं वेति यावत् ! परामर्शपूर्वं तस्य संशयस्य नाशादित्यन्वयः । यत्रादौ लिङ्गदर्शनं ततो व्याप्तिस्मरणं तदभिप्रायेण लिङ्गदर्शनस्य यत्र तयोर्विपरीतक्रमः, तदभिप्रायेण व्याप्तिस्मरणस्य नाशकत्वमभिहितम्; अत एकत्रोभयोर्नाशकत्वासम्भवेपि न क्षतिः । आदिपदेन यत्र संशयानन्तरक्षणे व्याप्तिस्मरणाद्यनुगुणज्ञानान्तरोत्पादः तदनन्तरमेव व्याप्तिस्मरणादिः तत्रत्यतादृशज्ञानसङ्ग्रहः ।

द्वितीयं दूषयति- नोपलक्षण मिति । अव्यावर्तकतापत्तेः-सिद्धिकाले अनुमित्यवारकतापत्तेः । तत्कालीनपरामर्शस्यापि कालान्तरीणसंशयविषयधर्मिवृत्तित्वावगाहितया सामग्र्या अक्षतत्वादिति भावः ।

अथ साध्यसन्देहोऽनुमितौ हेतुरेव, लिंङ्गदर्शनव्याप्तिस्मरणादिना पूर्वोत्पन्नसंशयनाशेपि तदनन्तरं परामर्शाव्यवहितप्राक्क्षणजातसंशयान्तरादेव अनुमितिरिति कल्प्यते; नचानुत्पन्न एव संशये यत्र स्वसामग्रीवशात्परामर्शोत्पत्तिस्तत्र अनुमित्यनुत्पादप्रसङ्गः, परामर्शकाले तदुत्तरं च विशेषदर्शनरूपप्रतिबन्धकवशेन संशयोत्पादासम्भवादिति वाच्यम्; फलानुरोधेन सर्वत्रैवानुमित्युपधायकपरामर्शाव्यवहितप्राक्क्षणे संशयोत्पादकल्पनात् . यत्र संशयोत्पादप्राक्क्षणे परामर्शसामग्री प्रमाणासिद्धा, यत्र वा परामर्शसामग्रीपूर्वक्षणे संशयजनकधर्मिज्ञानाद्यभावः प्रामाणिकस्तत्र परामर्शानन्तरं साध्यस्य प्रत्यक्षनिश्चय एवोपगम्यते, तत एव प्रवृत्त्याद्युपपत्तेः; तत्रानुमिनोमीत्यनुव्यवसायस्याप्यगत्या भ्रमत्वमेव कल्प्यते; अनुगतानुगतसिषाधयिषाभावकूटविशिष्टसिद्ध्यभावस्याऽनुमितिहेतुत्वा -

पेक्षया संशयहेतुतायां लाघवात् . संशयहेतुत्वोपगमे बाधनिश्चयदशायां संशयाभावादेवानुमितिवारणसम्भवात् नानाविधबाधाभावस्य अनुमिति हेतुत्वाकल्पनेनानुमितिसामग्रीप्रतिबन्धकतायां तदनिवेशेन च लाघवात् . जनकज्ञानविरोधितयैव च बाधादीनां हेत्वाभासत्वोपपत्तेः. संशयस्य च कार्यतावच्छेदककोटौ कारणवैशिष्ट्यं निवेश्य विशिष्य तादृशतादृश संशयत्वेनैव हेतुता वाच्या, अतो दीधितिकारदर्शितरूपस्य स्वत्वघटित ताया उक्तयुक्त्या आवश्यकत्वात् प्रतिबध्यतादीनां स्वस्वावच्छेदक भेदेन भिन्नानामननुगमाच्च शब्दानुगममात्रपर्यवसानेपि न क्षतिः। संशयस्य बाधसाधारणतदभाववत्ताज्ञानत्वेन कारणत्वम्, न तु पक्षधर्मिकसाध्यतदभावो भयप्रकारकज्ञानत्वरूपसंशयत्वेन; गौरवात् । बाधनिश्चयदशायां च नानुमित्यु पत्तिः, प्रत्यक्षादिसाधारणालौकिकविशिष्टबुद्धित्वावच्छिन्नं प्रति बाधनिश्चय प्रतिबन्धकताया आवश्यकत्वादिति तु न श्रद्धेयम्; बाधनिश्चये अप्रा माण्यग्रहसत्त्वे अनुमित्यापत्तेः, अप्रामाण्यग्रहाभावस्य संशयजनकतायां प्रयोजनविरहेणानिवेशात्, साध्यसन्देहे अप्रामाण्यग्रहसत्त्वेप्यनुमित्युप गमे क्षतिविरहात्, संशये अप्रामाण्यनिश्चयसत्त्वे अनुमित्यनुत्पादेपि संशये विषयसंशायकस्य अप्रामाण्यसंशयस्याकिंचित्करतया तत्र अप्रामाण्य निश्चयत्वावच्छिन्नाभावस्यैव निवेशनीयतया अप्रामाण्यशङ्कास्कन्दित बाधनिश्चयादनुमितेर्दुर्वारत्वात् इति चेन्न;– प्रत्यक्षादिना निर्णीतस्यापि साध्यस्यानुमित्सया अनुमितेरानुभाविकत्वात्, संशयस्य पक्षतात्वे तद नुपपत्तेः। अनुभवापलापे विशेषदर्शनमूलकप्रत्यक्षादेव सर्वत्र प्रवृत्त्यादि सम्भवे अनुमानप्रामाण्यस्यैव विलोपापत्तेः . पक्षधर्मताप्रत्यक्षव्याप्तिस्मरण योरविरलक्रमेणोत्पत्त्यनन्तरं यत्र परामर्शः तत्र व्याप्तिस्मरणकालीनपक्ष धर्मताज्ञानस्यापि विशेषदर्शनतया तस्य पूर्वं सत्त्वेन तत्र व्याप्ति स्मरणानन्तरं संशयाभावात्। एवमप्रसिद्धसाध्यकस्थले संशयासम्भवादनुमि त्यनुपपत्तेः, संशयानन्तरजातसिद्ध्यात्मकपरामर्शादनुमित्यापत्तेश्चेति संक्षेपः।

[दी] केवलान्वयिनि च पक्षनिष्ठाभावप्रतियोगित्वधीरेव सुलभो बाधः ।
ननु तत्रापि

---

संशयनाशेपि यावन्न निर्णय स्तावत्पर्यन्तं संशययोग्यताया अनपायात्तस्या एव पक्षतात्वं सम्भवतीति तदनिराकरणे मूलस्य न्यूनता, अतो **नापी** ति मूलमेव संशययोग्यतानिराकरणपरतया व्याचष्टे- **संशययोग्यता** मिति । साधकबाधकमानपदस्य सिद्धिबाधहेतुरूपयथाश्रुतार्थपरत्वे सवदा नुमित्यनुपपत्तिः; अनुमितिपूर्वं सिद्धिबाधहेतुभूतचक्षुरादेस्सिद्धिहेतुभूत परामर्शस्य च सर्वत्रैव सत्त्वात् , अतस्तत्पदं सिद्धिबाधपरतया व्याचष्टे- **साधके** ति । यद्यपि बाधकमानपदस्य बाधजनकसामग्रीपरत्वेपि न क्षतिः, बाधसामग्र्यनन्तरक्षणे कदाप्यनुमितेरनुत्पादात् ; तथापि बाध जनकतामात्रेण तत्सामग्रीपरत्वे तदवच्छिन्नाभावस्य हेतुता लभ्यते, तत्र चोक्तैवानुपपत्तिः; बाधसामग्रीत्वेन तत्परत्वं च विना लक्षणां न निर्वहतीति लक्षणाया आवश्यकत्वे बाध एव लक्षणोचितेत्यभिप्रायेण इदम् ।

ननु पक्षे साध्याभावनिश्चयस्य बाधतया केवलान्वयिनि साध्या भावाप्रसिद्ध्या बाधाप्रसिद्धिरिति तदभावघटितपक्षतावैकल्यम् , अत आह- **केवलान्वयिनिचे** ति । **पक्षनिष्ठे** ति । " साध्ये " इत्यादिः । **धीः**- निर्णयः । **सुलभो बाध** इति । तथा च तादृशबाधाभावस्यैव पक्षताघटकत्वान्नानुपपत्तिरिति भावः । **सुलभ** इत्यनेन तत्राभावांशे साध्य प्रकारकभ्रमात्मकबाधस्यापि कदाचित्कस्यचित्पुरुषस्य प्रसिद्ध्या तदभाव घटितत्वमपि पक्षतायास्सम्भवतीति सूचितम् ।

व्याप्तिस्मरणादिना पूर्वानुमित्सानाशस्थले अनुमितमुपपाद्य **सिषाध यिषाविरहेपी** त्यादिग्रन्थमवतारयति-**नन्वि** ति । **तत्रा पि**- परामर्शपूर्वे

सिषाधयिषितसाध्यधर्मा धर्मी पक्षः, अथ

---

पुनरनुमित्सा ततः परामर्शान्तरं स्मरणात्मकाद्वा परामर्शादनुमितीष्टसाधनताविषयकादनुमित्सा ततोनुमितिरिति फलबलात्कल्पनीयमित्यत आह– सिषाधयिषे ति ।

---

अनुमित्सानाशस्थलेपि । पुनरनुमित्सा— परामर्शानन्तरं अनुमित्सान्तरम् । ननु परामर्शानन्तरोत्पन्नेच्छाजनकज्ञानेनेच्छाजननसमकालं परामर्शस्य नाशात् तादृशेच्छातः कथमनुमितिरित्यत : आह— ततः परामर्शान्तर मिति । विनश्यदवस्थापन्नानुमित्सयाऽनुमितिमुपपाद्य अविनश्यदवस्थयाप्युपपादयति– स्मरणात्मकाद्वे ति । चाक्षुषादिपरामर्शस्यानुमित्संशे इष्टसाधनताप्रकारकसमूहालम्बनरूपत्वं न सम्भवति, स्वायोग्यमुख्यविशेष्यकज्ञानजनने इन्द्रियस्याऽसामर्थ्यात् ; अतस्तस्य तथात्वमुपेक्ष्य तन्मूलकव्याप्यवत्पक्षगोचरसंस्कारात्पूर्वानुमित्साजनकेष्टसाधनताज्ञानाहितसंस्कारसहकृतात् समूहालम्बनस्मरणात्मकपरामर्शान्तरस्य अनुसरणम् । स्मरणे त्युपलक्षणम् ; तथाविधमानसपरामर्शोपि बोध्यः ।

ननु कल्पकाभावान्नैतादृशकल्पनासम्भव इत्याशंकां परिहरति— फलबला दिति । सिषाधयिषारूपकारणं विना अनुमित्यात्मककार्यानुदयबलादित्यर्थः । सिषाधयिषाविरहेपी ति मूलस्य "अनुमातु" रित्यादिः; तेनेश्वरस्य सिषाधयिषायास्तत्राक्षतत्वेपि न क्षतिः. इच्छारूपपक्षताया आत्मनिष्ठप्रत्यासत्त्यैव हेतुतेत्यभिप्रायेणेदम् । नच तत्रापि पूर्ववत्फलबलादनुमित्सां कल्पयित्वा अनुमितिविशेषक्योपपत्तिका, तत्र तदभावस्यानुभवसिद्धतया कल्पनाऽसम्भवात् ; पूर्वं कदापि यस्य मेघानुमितिर्नासीत्तेन तत्रेष्टसाधनतया अगृहीतत्वेन तद्गोचरानुभवस्यचासम्भवेन तदनुमित्सा सामग्र्या एव दुर्घटत्वाच्च ।

[दी] नचानुमितिजनकेच्छैव पक्षता, सा च क्वचित्स्वनिष्ठैव सर्वत्रेश्वरनिष्ठैव सुलभेति वाच्यम् ; तस्या नित्यत्वेन सिद्धौ सत्यामपि पक्षता प्रसङ्गात् । नच तस्यास्तदानीं न तज्जनकत्वम् ; तद्धि न योग्यता, अनपायात् ; न तदुपधानम् , अनुमितेः पूर्वं तद् भावात् । न तत्सामग्रीसमवधानम् , कारणमात्रस्य पक्षताकुक्षि-

---

विषयनिष्ठप्रत्यासत्त्यैवानुमित्सायाः हेतुता वाच्येत्यभिप्रायेण उक्त स्थले पक्षतोपपत्तिं दीधितिकृदाशङ्कते— नचे ति । इच्छैव-- समानाधि करणव्यधिकरणसाधारणेच्छामात्रमेव । स्वनिष्ठैव— अनुमातृसमवेतैव । तस्याः- ईश्वरेच्छायाः । पक्षताप्रसङ्गा दिति । तथा च सिद्ध्यनन्तर मनुमित्यापत्तिरित्यर्थः । तदानीम्— सिद्धिदशायम् । नतज्जनकत्व मिति । तथाचानुमितिजनकत्वविशिष्टेच्छात्वेनैव हेतुता वाच्या; कारणतावच्छेदक विशिष्टस्य प्राक्सत्त्वमेव फलोपधाने तन्त्रमिति नातिप्रसङ्ग इति भावः ।

अनुमितिजनकत्वेन जनकत्वे आत्माश्रयसत्त्वेपि स्फुटत्वात्तमुपेक्ष्य दूषणान्तरमाह— तद्धी ति । योग्यता—स्वरूपयोग्यता । अनपाया दिति । कारणतावच्छेदकधर्मरूपयोग्यतायास्सर्वदैव सत्त्वादित्यर्थः । तदुपधानम्— तद्वैशिष्ट्यम् । तदभावात्- अनुमितिवैशिष्ट्याभावात् । तथाच अनुमित्युत्पादनियामिकाया अनुमितिविशिष्टेच्छायाः प्रागसत्त्वेन अनुमितेरेवानुपपत्तिः । इदमुपलक्षणम् ; अनुमित्यनन्तरं अनुमित्या पत्तिरपि बोध्या ।

नन्वनुमितिजनकतावच्छेदका यावन्तो धर्माः प्रत्येकं तदवच्छिन्न कूटविशिष्टत्वरूपतत्सामग्रीसमवधानमेवेच्छाविशेषणं देयम्; तच्च कार्याव्यव हितप्राक्क्षण एवेति नातिप्रसङ्ग इत्याशंकामपनुदति— न तत्सामग्री ति । कारणमात्रस्यैवे ति । तथाच परामर्शाद्यसत्त्वदशायामीदृशपक्षताविरहा देवानुमितिवारणसम्भवात्परामर्शादीनां हेतुताविलयप्रसङ्ग इति भावः ।

[दी] निक्षेपप्रसङ्गात् , शेषवैयर्थ्यात् , तदानीं सामग्रीविरहप्रयोजकव्यतिरेकप्रतियोगिनः कारणान्तरस्य वक्तव्यतापाताच्च ।

---

ननु सामग्रीसमवहितेच्छात्वेन न पक्षतया हेतुत्वमुपेयते, सामग्रीघटकहेतूनां मिथो विशेष्यविशेषणभावे विनिगमनाविरहात् तेषां स्वतन्त्रकारणतयैवातिप्रसङ्गस्य वारितत्वात् ; किंत्वीश्वरेच्छामादायैव सिद्धिकाले पक्षताव्यवहारवारणाय पक्षपदप्रवृत्तिनिमित्तत्वमेव ताद्रूप्येणोपेयते, अतो नायं दोष इति दूषणान्तरमाह- शेषे ति । अनुमितिसामग्र्या एव पक्षतात्वसम्भवेन इच्छारूपविशेष्यभागस्य निष्प्रयोजनकत्वादित्यर्थः

अत्रचेष्टापत्तौ दूषणान्तरमाह- तदानी मिति । परामर्शादिसमवहितसिद्धिदशायाम् । अन्वयश्चास्य सामग्रीविरहे त्यनेन । वक्तव्यतापातात्- सामग्रीमध्यनिवेशापातात् ; तथाचैतादृशकारणं सिषाधयिषाविरहविशिष्टसिद्ध्यभाव एव । एवंचैतस्यैव पक्षतात्वमस्तु, अलं कारणान्तरस्य पक्षताकुक्षिनिक्षेपेणेति सिद्धान्तलक्षण एव पर्यवसानमिति भावः ॥

सिद्धान्तलक्षणे— सिध्युत्तरक्षणे सिषाधयिषाधीनानुमितेरुपपादनाय सहकृतान्तं साधकमानविशेषणमुपात्तम् ; तच्च तदैवोपपद्यते- यदि सिद्धिसिषाधयिषापरामर्शानां त्रयाणां अनुमित्यव्यवहितपूर्वक्षणे अवस्थितिस्सम्भवति ? नचैवमुपपद्यते, आत्मयोग्यविशेषगुणानां द्विक्षणमात्रावस्थायित्वात् त्रयाणां युगपदनवस्थानात् । नच यत्रापेक्षाबुद्ध्यात्मकस्य परामर्शस्य साध्यनिश्चयस्य वा प्रथममुत्पाद स्तत्रैव तृतीयक्षणे त्रयाणामवस्थानं सम्भवतीति वाच्यम् , अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वमङ्गीकुर्वाणैस्तदव्यवहितोत्तरक्षणे तदधिकरणे विशेषगुणोत्पादानभ्युपगमात् ; अन्यथा स्वसमानाधिकरणस्वानन्तरोत्पन्नविशेषगुणात्मक नाशकबलात्तस्या अपि तृतीयक्षणे विनाशापत्तेरित्याशंकापरिजिहीर्षया सिद्ध्यात्मकसमूहालम्बनपरामर्शस्थले तादृशविशेषणप्रयोजनं दर्शयति—

तथा हि;— मुमुक्षोश्शब्दादात्मावगमेपि मननस्य मोक्षोपयोगित्वेन सिद्धिविषयानुमितीच्छयात्मानुमानम् ; अत एव "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" "न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेनुमातारः" इति वाचस्पतिमिश्रवचनयोरविरोधः, अनुमित्सातद्विरहाभ्यां तदुपपत्तेरिति चेन्न;— सन्देहवत्परामर्शपूर्वं सिषाधयिषाया अभावात्, योग्यतायाश्चानिरूपणात्, सिषाधयिषाविरहेपि घनगर्जि-

---

[दी] सिषाधयिषे ति । यत्रानुमित्सानन्तरं साध्यतद्व्याप्यविशिष्टपक्षस्मरणं अनुमितीष्टसाधनताविषयकतादृशस्मरणाद्वानुमित्सा,

---

यत्रे त्यादिना । अनुमित्साव्यवहितोत्तरक्षणे विशिष्टपक्षप्रत्यक्षं न सम्भवति, इच्छोत्पत्तिकाले ज्ञानानुत्पत्त्या विशेषणज्ञानघटितसामग्रीविरहात् ; इच्छापूर्वक्षणे तादृशसामग्रीसमवधाने इच्छासामग्र्यपेक्षया प्रत्यक्षसामग्र्याः बलवत्त्वेन तस्या एव पूर्वोत्पादासम्भव इत्यतो विशिष्टस्मरणानुधावनम् । न्यूनताभङ्गाय परामर्शपूर्वोत्पन्नेच्छास्थले प्रयोजनमुक्त्वा तदनन्तरोत्पन्नेच्छास्थले तद्दर्शयति— अनुमिती ति । यत्रे त्यनुषज्यते । इच्छासामग्रीसम्पत्तये अनुमितीष्टसाधनताविषयके ति । तादृशस्मरणात्—

तेन मेघानुमानात्, स्वकारणाधीन तृतीयलिङ्गपरामर्शबलेन अनयोर्विसानु मानाच्च । उच्यते;– सिषाधयिषाविरह सहकृतसाधकमानाभावो यत्र स पक्षः,

---

अनुमित्सापूर्वकालोत्पन्नविशेषणस्मरणाद्वानुमित्साकालोत्पन्नेन्द्रियसन्निकर्षसहिता त्साध्यतद्व्याप्यविशिष्टपक्षप्रत्यक्षं तदनन्तरंचानुमिति स्तत्र पक्षतासम्पत्तये सहकृतान्तं साधकमानविशेषणम् ।

---

साध्यतद्व्याप्यविशिष्टपक्षस्मरणात् । पूर्वोक्तयुक्त्या चाक्षुषादिपरामर्शस्यानुमिताविष्टसाधनतावगाहित्वासम्भवात् यत्र परामर्शाऽव्यवहितपूर्वक्षणे इष्ट साधनताज्ञानं तत्र तत्पूर्वक्षण एव फलेच्छासम्भवेन तस्याः परामर्शोत्पत्तिसमये नाशाचदुत्तरमनुमित्साया असम्भवेनेष्टसाधनताविषयकपरामर्शस्यावश्यकत्वात् स्मरणपर्यन्तानुधावनम् । न्यूनतापरिहाराय प्रत्यक्षस्थले प्रयोजनमाह— अनुमित्सापूर्वे ति । अत्रापि यत्रे त्यनुषज्यते । प्रत्यक्षात्मकधूमादिविशेषणज्ञानस्थले तज्जनकसन्निकर्षादितः तदुत्तरक्षणे विशिष्ट प्रत्यक्षमेव भविष्यति, नत्विच्छा ; विनश्यदवस्थसन्निकर्षाद्विशेषण प्रत्यक्षानुधावने च प्रयासगौरवम्, अतो विशेषणस्मरणपर्यन्तानुधावनम् । अनुमित्सापूर्वकाले परामर्शजनकसन्निकर्षादिसत्त्वे तस्या एवानुत्पत्तिः, अतोऽनुमित्साकालोत्पन्नेन्द्रियसन्निकर्षसहिता दिति । सहकृतान्तम्– सहकृतान्तभागोपस्थाप्यसिषाधयिषाविरहवैशिष्ट्यम् ; तस्याभाव विशेषणत्वे सिषाधयिषादशायां तदभावविशिष्टस्य सिद्ध्यभावस्यासम्भवात् सिद्धौ सत्यामसत्यां चानुमित्यनुपपत्तिः, अत स्साधकमानविशेषण मिति ।

सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकानुमितिविषयकेच्छा,

---

सिषाधयिषापदस्य सिद्धीच्छासामान्यपरत्वे यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छाबलात्सिद्धिकाले अनुमित्यापत्तिः । नचानुमित्युत्पत्त्यापि तादृशेच्छाविषयसिद्धेः तत्रानुमितिरिष्टैवेति वाच्यम् ; प्रकृतानुमित्युत्पत्त्यैव यादृशेच्छाया विषयसिद्धिस्तादृशेच्छासत्त्व एव सिद्धिकाले अनुमितेरानुभाविकत्वादुक्तेच्छायाश्चान्तत उपस्थितपदार्थगोचरमानसज्ञानेनापि विषयसिद्ध्याऽकिंचित्करत्वादित्यत स्सिषाधयिषापदार्थं व्याचष्टे- सिषाधयिषाचे ति । घटविशिष्टपर्वतविषयकानुमितिर्जायतामित्येतादृशेच्छासत्त्वे सिद्धिसत्त्वे वह्न्यनुमित्यनुत्पादा त्तत्साध्यविशिष्टे ति । तत्सम्बन्धेन तत्साध्यतावच्छेदकावच्छिन्नविशिष्टेत्यर्थः । तेन कालिकसम्बन्धेन वह्निविशिष्टपर्वतविषयकानुमितिर्जायतां द्रव्यत्वावच्छिन्नविशिष्टपर्वतविषयकानुमितिर्जायतामित्येतादृशेच्छासत्त्वेपि न सिद्धिकाले संयोगादिना वह्नित्वावच्छिन्नस्यानुमितिः. वह्निविशिष्टमहानसविषयकानुमितिर्जायतां वह्निविशिष्टद्रव्यत्वावच्छिन्नविषयकानुमितिर्जायतामितीच्छाबलात्पर्वतो वह्निमानित्यनुमित्यनुत्पादात् तत्पक्षके ति । तत्पक्षतावच्छेदकावच्छिन्नेत्यर्थः ।

नच यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छाबलादिव आलोकवान् पर्वत इत्याद्यनुमितिसामग्रीदशायां वह्निमत्पर्वतविषयकानुमितिर्जायतामितीच्छाबलादपि सिद्धिसत्त्वे वह्न्यनुमितिर्न जायते, तत्कालीनसिद्ध्या प्रतिबद्ध्यालोकानुमित्युत्पत्त्यैव तादृशेच्छाविषयसिद्धेरित्युक्तरूपेणापीच्छाया उत्तेजकत्वं न सम्भवतीति वाच्यम ; साध्यविशिष्टपक्षनिरूपितविलक्षणविषयिताप्रकारकत्वेनैव इच्छाया उत्तेजकत्वोपगमात्. आलोकवान्पर्वत इत्याद्यनुमितेर्वह्निविशिष्टनिरूपितविलक्षणविषयताशून्यत्वेन तदुत्पत्त्या तादृशविषयताप्रकारकेच्छाविषयसिद्ध्यसम्भवात् । साध्यविशिष्टपक्षनिरूपि-

[दी] यत्किंचिद्गोचरं ज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वेऽनुमि त्यनुत्पादात् .

---

तत्वं च साध्यावच्छिन्नपक्षनिष्ठानिरूपकताकत्वम् , अतो ह्रदो वह्निमानि त्यादौ साध्यविशिष्टपक्षाप्रसिद्धावपि न तादृशविषयतायास्तत्प्रकारकेच्छा याश्चाप्रसिद्धिः, ह्रदादिनिष्ठतादृशभ्रमवृत्तिविषयतानिरूपकत्वस्यापि ह्रदाद्यंशे प्रकारीभूतवह्न्याद्यवच्छिन्नत्वात् ।

वस्तुतस्तु- तत्साध्यविशिष्टतत्पक्षविषयकत्वे त्यनेन तत्साध्यता वच्छेदकावच्छिन्नतत्संसर्गावच्छिन्नविधेयतानिरूपिततत्पक्षतावच्छेदकावच्छि न्नोद्देश्यताकत्वं विवक्षितम् ; अतो वह्निमान्पर्वतो घटवानित्याद्यनु मितिसामग्रीदशायां पूर्वोक्तयुक्त्या वह्निविशिष्टपर्वतविषयकानुमितिर्जाय तामित्येतादृशेच्छावलात्पर्वतादिपक्षकवह्न्यादिविधेयकानुमित्यनुत्पादेपि न क्षतिः । तादृशोद्देश्यतात्वेन च तादृशोद्देश्यताकत्वप्रकारकत्वं विवक्षणीयम् ; तेन केवलपर्वतत्वावच्छिन्नोद्देश्यतात्वेन तादृशोद्देश्यताप्रकारकानुमित्साद शायां पर्वते अन्यानुमितिसामग्रीसत्त्वे वह्नेस्सिद्धिसत्त्वे न वह्न्यनुमित्या पत्तिः. एवं पक्षतावच्छेदकादिनिष्ठानवच्छिन्नत्वावगाहित्वमपि निवेशनीयम् ; अन्यथा जातिमान्वह्निव्याप्यवानिति परामर्शकाले पर्वतो वह्निव्याप्य धूमवान् पर्वतो वह्निमानिति सिद्धिसत्त्वे अनवच्छिन्नत्वानवगाहीच्छा काले पर्वतो वह्निमानित्यनुमित्यापत्तेः. पर्वतो वह्निव्याप्यवानिति परा मर्शकालीन- जातिमान्वह्निव्याप्यवानिति परामर्शशून्यकालीनानवच्छिन्न त्वानवगाहीच्छानां च तत्तद्व्यक्तित्वेनोत्तेजकत्वमिति बोध्यम् ।

साध्यविशिष्टपक्षविषयकत्वप्रकारकत्वनिवेशनप्रयोजनं दर्शयति— यत्किंचि दिति । यत्किंचिद्विषयकत्वप्रकारकत्वं निवेश्यापि यत्किंचिज्ज्ञानं जायतामित्यादीच्छावारणं सम्भवतीति यत्किंचिद्गोचरत्वप्रकारकेच्छानु-

[दी] अनुमितित्वाद्यप्रकारिकायामपि प्रत्यक्षाद्यतिरिक्तं पर्वते वह्निज्ञानं जायतामितीच्छायां प्रत्यक्षाद्यनन्तरं अनुमित्युत्पादाच्च ।

---

वाधनम् । नचेच्छापूर्वं यत्किंचिद्गोचरज्ञानस्यावश्यसिद्धत्वात्तादृशेच्छैव न सम्भवति, ज्ञानगोचरेच्छायां स्वरूपसत्याः स्वविषयसिद्धेरेव विरोधित्वात्; तदुक्तम्– " न हि ज्ञाने जाते ज्ञानेच्छा भवतीती" ति वाच्यम् ; एतदुत्तरवर्तियत्किंचिद्गोचरं ज्ञानं जायतामित्याद्याकारकेच्छाया एव विवक्षितत्वात् ।

नन्वनुमितित्वप्रकारकत्वं निवेश्यैव तथाविधेच्छावारणसम्भवे किं गुरुतरसाध्यविशिष्टपक्षविषयकत्वप्रकारत्वनिवेशेनेत्यत आह- **अनुमितित्वाप्रकारिकायामपी** ति । प्रत्यक्षाद्यात्मकसिद्धिदशायां पर्वते वह्निज्ञानं जायतामित्याकारकेच्छा न सम्भंवति, तद्विषयीभूतप्रत्यक्षादिसिद्धेरेव सिद्धत्वात् , अतः **प्रत्यक्षाद्यतिरिक्त** मिति । शाब्दादिरूपसिद्धौ सत्यां प्रत्यक्षाद्यविरिक्तज्ञानं जायतामित्यादीच्छाया उत्पादासम्भवात् **प्रत्यक्षाद्यनन्तर** मिति । प्रत्यक्षादिरूपसिद्ध्यनन्तरमित्यर्थः । आदिपदाभ्यां शाब्दादिसिद्धिकालीनानां शाब्दान्यज्ञानं जायतामित्यादीच्छानां संग्रहः । **अनुमित्युत्पादाच्चे** ति । तथाचानुमितित्वप्रकारकत्वं निवेशयितुमशक्यमेव, तादृशेच्छानामसंग्रहप्रसङ्गादिति भावः । इदमुपलक्षणम्— अनुमितित्वप्रकारकत्वनिवेशेपि घटानुमितिर्जायतामितीच्छाकाले सिद्धिसत्त्वे वह्न्याद्यनुमितिवारणाय प्रकृतसाध्यादिविषयकत्वप्रकारकत्वनिवेशनमावश्यकम्. नच प्रकृतसाध्यादिविषयिणी या अनुमितिस्तद्विषयकत्वनिवेशेनापि दर्शितेच्छावारणसम्भव इति वाच्यम् ; दर्शितेच्छाया अपि घटाद्यनुमितित्वेन वह्न्यादिगोचरसमूहालम्बनानुमितिविषयकत्वात् . नचानुमितित्वप्रकारकत्वानिवेशे अनुमितिरेव यत्र प्रत्यक्षत्वादिना इच्छाविषयस्तत्रानुमित्यापत्तिरिति वाच्यम्; इष्टत्वात्. अनुमितौ प्रत्यक्षत्वभ्रमदशायामेव तादृशे

च्छाया उत्पादात्. तस्या अनुमितित्वप्रकारकेच्छासमशीलत्वादिति हृदयम् । नचानुमितित्वप्रकारकत्वस्यानिवेशे पर्वते वह्नेः प्रत्यक्षतः सिद्धौ शाब्द सामग्र्यां च सत्यां प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छासत्त्वे अनुमित्यापत्तिरिति वाच्यम्; तत्र पक्षतासत्त्वेप्यनुमितित्वप्रकारकेच्छाविरहविशिष्ट समानविषयकशाब्दसामग्र्याः प्रतिबन्धकत्वादेवानुमितिवारणसम्भवात् ।

अथ सिद्धिदशायां पर्वते वह्नेरन्यत् ज्ञानं जायतामितीच्छा सत्त्वे अनुमित्यापत्तिः; तस्या अप्यनुमितिविषयकत्वात्; नचेष्टापत्तिः, तदुत्तरं पर्वतो वह्निमानित्यादिमानसाद्युत्पत्त्यापीच्छाविषयसिद्धेस्तादृशे-च्छाया यत्किंचिद्गोचरं ज्ञानं जायतामित्येतादृशेच्छातुल्यत्वात्. नच प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्रीरूपप्रतिबन्धकसत्त्वान्नानुपपत्तिरिति वाच्यम्; प्रत्यक्षत्वादिप्रकारकेच्छाविशिष्टायां एव मानसादिसामग्र्या अनुमितिप्रतिबन्धकत्वात्; अन्यथा सिद्धिशून्यकालेपि तादृशेच्छासत्त्वे अनुमित्यनुत्पादप्रसङ्गात् । नचोक्तयुक्त्या वह्निविधेयकत्वावगाहित्वानिवेशस्यावश्यकत्वाद्वह्निप्रकारकत्वावगाहिदर्शितेच्छाबलान्नानुमितिप्रसङ्गः, अनुमितिनिष्ठ तद्विधेयकत्वावगाहीच्छादशायां च जायत एवानुमितिः, विधेयतायाः प्रत्यक्षे अप्रामाणिकतया तत्प्रकारकेच्छाया अनुमित्युत्पत्त्यैव विषय सिद्धेरिति वाच्यम्; विधेयतायाः प्रत्यक्षव्यावृत्तत्वे तत्प्रकारिकायाः प्रत्यक्षान्यत्वाप्रकारिकाया अपीच्छायाः प्रत्यक्षसिद्धिकाले सम्भवात्प्रत्यक्षान्यत्वप्रकारकेच्छापर्यन्तानुधावनस्य दीधितिकृतो निर्बीजत्वात् । नच विधेयता प्रत्यक्षव्यावृत्तैव, तदवगाहित्वसूचनायैव उपदर्शितेच्छाऽऽकारे प्रत्यक्षन्यत्वोल्लेख इति वाच्यम्; एवमपि वक्ष्यमाणस्य "शाब्दसिद्धि काले अशाब्दज्ञानं जायतामितीच्छाबलेन अनुमितिर्जायते, न तु प्रत्यक्ष सामग्रीकाले" इत्यस्य सङ्गमयितुमशक्यत्वात् तादृशेच्छायाः प्रत्यक्षव्यावृत्त विधेयत्वावगाहित्वे प्रत्यक्षसामग्रीकालेपि तद्बलादनुमित्यौचित्यात्तदनवगाहित्वे सिद्धावप्यनुत्तेजकत्वात् ।

[दी] यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिस्तत्तदभावसमुदायस्य

---

अत्रोच्यते;– अनुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामनुमिति विषयकेच्छात्वेनैवानुगमः . पर्वते वह्नेरन्यज्ज्ञानं जायतामित्याद्याकारकेच्छा काले सत्यां सिद्धौ तथाविधोपनीतभानसामग्र्यां च अनुमितेर्वारणाय तथा विधेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन प्रतिबन्धकता कल्प्यत इति न दोष. । नच तासां तत्तद्व्यक्तित्वेनानन्तप्रतिबन्धकताकल्पनमपेक्ष्यानुमितित्वादिरूप प्रकारविशेषमन्तर्भाव्यैवानुमित्सानामुत्तेजकत्वमुचितमिति वाच्यम् ; तथा सति पर्वते वह्नेरन्यज्ज्ञानं जायतामितीच्छाकाले तथाविधोपनीतभान विरोधिघटाद्यनुमितीच्छाविशिष्टतत्सामग्रीसत्त्वेपि सिद्धौ सत्यां वह्न्यनुमि त्युपपत्तये तादृशेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन सिद्धावुत्तेजकत्वापत्त्या तदभावसहस्रस्य मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण सिद्धि प्रतिबन्धकतानन्त्यप्रसङ्गात् ।

नन्नु — साध्यविधेयकत्वावच्छिन्नपक्षोद्देश्यकत्वप्रकारकेच्छाया उपादाने पक्षोद्देश्यकत्वावच्छिन्न साध्यविधेयकत्वप्रकारकेच्छाया असंग्रहः, एवं विषयानुपरक्तानुमिति विषयिण्याः अनुमिति- र्जायतामितीच्छाया अपि निरुक्तरूपेणासंग्रहः ! नच सा असंग्राह्यैव , असिद्धसाध्यान्तरानुमितिसामग्र्यामसत्यां तद्बलादपि सिद्धस्य प्रकृतसा ध्यस्यानुमितेस्तदिच्छाविषयसिद्ध्यनुरोधेनावश्यकत्वादित्यत आह– **यादृश यादृशे** ति । असत्यां सिद्धौ यत्किंचिद्गोचरं ज्ञानं जायतामित्यादीच्छा सत्त्वे अनुमित्युत्पादा त्तासांचानुत्तेजकत्वा **त्सिद्धौ सत्या** मिति । **तत्तदिच्छाभावसमुदायस्ये** ति । साध्यविशेषविशिष्टपक्षविशेषाद्यवगाहि त्वप्रकारकेच्छानां तत्तदवगाहित्वप्रकारकानुमितिगोचरेच्छात्वेनानुगमय्य एकैकाभावा निवेश्यन्ते, अतथाविधानामनुमितिर्जायतां प्रत्यक्षान्यज्ज्ञानं

[दी] विशेषणत्वादिच्छाया अननुगमेपि न क्षतिः ।

---

जायतामित्याद्याकारकेच्छानां तु यद्व्यक्तिसत्त्वे सिद्धिसत्त्वेनुमितिस्तद्व्यक्तित्वावच्छिन्नाभावा एव निवेशनीयाः, अन्यथा अतिप्रसङ्गात् ; तत्कालीन सिद्धिभेदा एव वा । एतेन तत्कालीनसंयोगविभागादिव्यक्तिविशेषाभाव निवेशमादाय विनिगमनाविरहो निरस्तः । सामानाधिकरण्यसम्बन्धेन तदत्यन्ताभाववैशिष्ट्यनिवेशापेक्षया तत्तत्सिद्धिभेदानां विशेषणताविशेष सम्बन्धेन वैशिष्ट्यनिवेशे प्रतियोगितावच्छेदकसम्बन्धानिवेशेन च लाघवम् । सिद्ध्युत्तरं तथाविधेच्छोत्पत्तिकाले अनुमित्यापत्तिस्तु इच्छा सामग्र्याः अनुमितिविरोधित्वादेव न सम्भवतीति ध्येयम् ।

इदन्त्ववधेयम्— तादृशेच्छभावसमुदायस्य न तत्समुदायत्वेन निवेशः, समुदायत्वस्य दुर्वचत्वात् । नच तावन्मात्रविषयकधीविषयत्वं तत् , तावत्त्वस्य दुर्वचत्वात् . तावदभावविषयकबुद्धेस्तत्तदभावविषयकत्वेन निवेशे तदपेक्षया लाघवेन तत्तदभावानां तत्तदभावत्वेन सिद्धावेव निवेशयितुमुचितत्वात्तत्तदभावानां मिथो विशेषणविशेष्यभावानापन्नानां निवेशे अवच्छेदकभेदात्प्रतिबन्धकताभेद इति एकविशिष्टापरत्वेनैवाभावानां निवेशनीयत्वात् . अत्र च विशेष्यविशेषणभावे विनिगमनाविरहेपि न क्षतिः, गत्यन्तराभावात् . तावदभावमात्रविषयकधीविषयत्वेन निवेशेपि ज्ञाने तत्तदभावविषयितानां एकविशिष्टापरत्वेनैव विशेषणीयतया विशेषण विशेष्यभावे विनिगमनाविरहस्यावश्यकत्वादिति ।

इच्छाया अननुगमेपि— एकरूपेण सर्वासामिच्छानामुपादाना सम्भवेपि । न क्षतिः— न सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यानुमिति हेतुत्वानुपपत्तिः; तावदभावविशिष्टसिद्ध्यभावस्यानुगतत्वादिति भावः ।

इदमत्रावधेयम्; वह्निविशिष्टपर्वतमहानसोभयानुमितिर्जायता मित्याकारकेच्छानामपि तत्साध्यविशिष्टतत्पक्षावगाहित्वप्रकारकतया पर्वते वह्निसिद्धिकाले महानसपक्षकानुमितिसामग्र्यामसत्यां तादृशेच्छाबला त्पर्वते वह्न्यनुमित्यापत्तिः. अनुमित्यंशे तत्साध्यविशिष्टतत्पक्षविषयकत्वा न्ययत्किंचिद्विषयकत्वाप्रकारकत्वविशेषणस्येच्छायां निवेशे वह्निविशिष्टं पर्वतं महानसं चानुमिनुयामित्यादिसमूहालम्बनेच्छाया असंग्रहप्रसङ्गः, वह्निविशिष्टपर्वतविषयिणी महानसाविषयकानुमितिर्भिन्नानुमितिर्जायता मित्याद्याकारकेच्छाबलादुपदर्शितस्थले अतिप्रसङ्गस्याशक्यवारणताचेतीच्छा विषयतावच्छेदकतायाः पर्याप्तिनिवेशनमावश्यकम्; तथा च वह्निवि शिष्टपर्वतानुमितिर्भवत्वित्यादीच्छायास्तत्साध्यविशिष्टतत्पक्षविषयकानुमिति त्वपर्याप्तविषयतावच्छेदकताकेच्छात्वेनैवोत्तेजकत्वं पर्यवसितम्; अनुमिति त्वानन्तर्भावे तादृशेच्छायास्तत्साध्यविशिष्टतत्पक्षविषयकत्वपरिसमाप्तविष यतावच्छेदकताकत्वाभावेनाशक्यसंग्रहत्वात्. एवंचानुमितित्वप्रत्यक्षान्य ज्ञानत्वादिप्रकारकेच्छानामनुमितिविषयकत्वरूपेण संग्रहाभिधानमसङ्गतम्. नच तत्करूपं परित्यज्यैव यादृशयादृशे त्याद्यभिधानमिदानीमनुमितित्व प्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानां पृथक्पृथगभावनिवेशनमेवाभिप्रेत मिति वाच्यम्; पक्षान्तरत्वसूचक- वाकाराद्यभावात् ।

अथानुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामनुगम एव सम्भ वति; तथा हि; तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वपर्याप्तावच्छेदकता कत्वं तादृशधर्मघटकपरिसमाप्तावच्छेदकताकत्वं तत्साध्यविशिष्टतत्पक्षवि षयकत्वानुमितित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपक विषयताकत्व मेव पर्यवसितम्. एवंच तत्र तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रत्यक्षान्यज्ञा नत्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकेच्छात्वादिनाप्रत्य क्षान्यज्ञानत्वादिप्रकारकेच्छानां पृथगुत्तेजकत्वापेक्षया निरुक्तधर्मघटकानुमिति

त्वनिष्ठावच्छेदकताभिन्नावच्छेदकतायामेव प्रत्यक्षान्यज्ञानत्वादिनिष्ठावच्छेदक ताभिन्नत्वनिवेशनमुचितम्; लाघवात्. इत्थं च तादृशरूपेणैव प्रत्यक्षान्यज्ञान त्वादिप्रकारकेच्छानामपि संग्रहस्सम्भवति. नच वह्निविशिष्टपर्वतविषयकं जायतामित्याकारकेच्छायास्सिद्धचधीनसंस्कारोत्पत्त्यैव चरितार्थाया वारणाय विषयतायामनुमितित्वावच्छिन्नत्वनिवेशनस्यावश्यकतया न तत्संग्रह इति वाच्यम् ;समवायेन किंचिदवच्छिन्नत्वं निवेश्यैव तादृशेच्छानां वारणसम्भवादिति चेन्न;- एवं सति पक्षांशे साध्यावगाहित्वेनानुमितिविषयकेच्छानामुक्तरूप समशीलरूपान्तरेणोत्तेजकत्वापेक्षया तादृशावच्छेदकतायामेव पक्षांशे साध्यावगाहित्वीयावच्छेदकताभिन्नत्वमपि निवेश्यताम्, तावतैव तत्संग्रहस्यापि सम्भवादिच्छाया अननुगमाभिधानासङ्गतिः । नच विषयतायां साध्यविशिष्टपक्षावगाहित्वाद्यवच्छिन्नत्वविशेषणमावश्यकम्, अन्यथा अन्यानुमितिसामग्रीसमवहितानामनुमितिर्जायतामित्याकारकविषयविशेषानुपरक्तानुमितीच्छानां वारणासम्भवादिति अन्यानुमितिसामग्र्यसमवहितता दृशेच्छानां तत्तद्व्यक्तित्वेनैवोत्तेजकत्वस्योपगन्तव्यतया उत्तेजकानामननुगमाभिधानं सम्भवतीति वाच्यम्; तादृशेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन प्रतिबन्धकतयैवातिप्रसङ्गवारणसम्भवेन तासां वारणानौचित्यात्. साध्यविशिष्टपक्षावगाहित्वावच्छिन्नत्वमधिकमनुमितिनिष्ठविषयतायां निवेश्य दर्शितसामग्र्यसमवहित तथाविधेच्छानां तत्तद्व्यक्तित्वेनोत्तेजकताकल्पने गौरवप्रसङ्गात्, अन्यानुमितिसामग्रीकालीनतादृशेच्छानां तत्कालीनतत्तदात्म वायुसंयोगादिव्यक्तीनां विनिगमनाविरहेण प्रतिबन्धकताप्रसंगवत्तादृश सामग्र्यभावकालीनतथाविधेच्छानामुत्तेजकत्वमतेपि विनिगमनाविरहेण तत्तदिच्छाकालीनसंयोगविशेषाणामुत्तेजकताप्रसंगस्य दुर्वारत्वात् । अथ वा उक्तानुगतरूपेणोत्तेजकीभूतायामिच्छायां अनुमितिर्जायतामित्याकारकान्यानुमितिसामग्रीसमवहितेच्छाव्यक्तीनां भेदा एव निवेश्याः, न तु तासां प्रतिबन्धकत्वमिति तत्तदिच्छाभेदनिवेशस्थले तत्कालीनवायुसंयोगभेद-

निवेशे च नोपपत्तिः, इच्छायां तद्भेदस्याव्यावर्तकत्वात्. तत्तत्संयोगाभावानां वैशिष्ट्यस्य निवेशे च वैशिष्ट्यस्य सामानाधिकरण्यरूपतया साक्षात्सम्बन्धेनेच्छाभेदानिवेशे लाघवस्यैव विनिगमकत्वात् ;

अत्राहुः— उक्तसकलेच्छानां निरुक्तरूपेणानुगमेपि एतत्क्षणानन्तरक्षणे अनुमितिर्भवत्वित्याद्याकारकेच्छनामेव निरुक्तेन रूपेणासंग्रहात्तत्तद्व्यक्तित्वेन पृथगभावा निवेशनीयाः तादृशक्षणवृत्तित्वाद्यवच्छेदकताभेदमुक्तावच्छेदकतायां निवेश्य तत्संग्रहे कालान्तरेपि तथाविधेच्छाबलादनुमित्यापत्तिः. कालान्तरे अनुमित्युत्पत्त्या च तादृशानुमित्साविषयासिद्धेरिष्टापत्त्ययोगादित्यननुगमाभिधानसङ्गतिः । नच कालान्तरीणतादृशेच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकतया तादृशेच्छाबलादनुमित्यापत्तिवारणसम्भव इति वाच्यम् ; उपदर्शितैकैकधर्मप्रकारकैकैकानुमित्साव्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकत्वापेक्षया तत्समानप्रकारककालान्तरीणबहुतरेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वे गौरवात्. नचैवमपि प्राथमिकस्य साध्यविशिष्टपक्षविषयित्वप्रकारकत्वविशेषणाभिधानस्यासङ्गतिर्दुर्वारैवेति वाच्यम् ; अनुमितिनिष्ठविषयतायां साध्यविशिष्टपक्षविषयत्वाद्यन्यप्रकारानवच्छिन्नत्वनिवेश एव तात्पर्यात् ।

वस्तुतस्तु— साध्यविशिष्टपक्षविषयकत्वप्रकारकत्वनिवेशनमावश्यकम्, अन्यथा किंचिज्ज्ञानं जायतां यत्किंचिद्गोचरं ज्ञानं जायतामित्यादीच्छावारणासम्भवात् ; तत्संग्रहे तादृशीनां सर्वासामिच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वे गौरवात्. अनुमितिर्जायतामित्यादीच्छानां च पृथगनुमितित्वादिपर्याप्तविषयतावच्छेदकताकेच्छात्वेनैवोत्तेजकता. अन्यानुमितिसामग्रीसमवहिततादृशेच्छानां च तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वमेवेति सर्वं समंजसम् ।

[दी] धूमेन वह्निमनुमिनुयामितीच्छायामालोकपरामर्शादसत्यामपि सिद्धौ यदि नानुमितिः तदा तदन्यमात्रलिंगकसिद्धीच्छा

---

ननु धूमेन पर्वते वह्निमनुमिनुयामित्याकारकेच्छाबलाद्धूमलिङ्ग कानुमित्युत्पत्त्या तत्साधरणरूपेणैव सिषाधयिषाणां सिद्धावुत्तेजकताया आवश्यकत्वात् तत्सत्त्वे सिद्धिकाले असत्यपि धूमपरामर्शे आलोकादि परामर्शादनुमित्यापत्तिः, पक्षताया अक्षतत्वादित्यत आह-- **धूमेने** ति । भिन्नलिङ्गकेच्छासत्त्वे सिद्धिदशामात्र एव यदि नानुमितिस्तदा तादृशे च्छायाः प्रतिबन्धकत्वं न सम्भवतीत्यतः **असत्यामपि सिद्धा** विति ! तत्रानुमितेस्सन्दिग्धतया **यदी** ति । **तदे** ति । "तल्लिंगकानुमिता" विति शेषः । **तदन्यमात्रे** ति । तदन्यमात्रलिंगकत्वप्रकारकसिद्धीच्छेत्यर्थः । धूमलिंगकानुमितिरालोकलिंगकानुमितिश्च जायतामित्याकारकसमूहालम्बने च्छाकाले आलोकादिपरामर्शादनुमित्युपपत्तये **मात्रे** ति । तदन्यमात्र लिंगकत्वप्रकारकत्वं च तल्लिंगकत्वाप्रकारकत्वे सति यत्किंचिल्लिंगकत्व प्रकारकत्वम् ; अतः प्रमेयसामान्यलिंगकस्थले तदन्याप्रसिद्धावपि न दोषः । तल्लिंगकत्वाप्रकारकत्वं च तल्लिंगकत्वप्रकारकतानिरूपिततत्साध्य विशिष्टतत्पक्षविषयकत्वावच्छिन्नानुमितिनिष्ठविशेष्यताकान्यत्वम् ; अतः आलोकेनेंधनं धूमेन तु वह्निमनुमिनुयामित्यादीच्छादशायामालोकादिलिंङ्ग कवह्न्याद्यनुमितेर्नापत्तिः. आलोकलिंगकत्वप्रकारकताशरीरे च वास्तवा लोकादिप्रकारता न निवेशनीया, किंत्वालोकत्वाद्यवच्छिन्नप्रकारतैव ; अन्यथा आलोकत्वादिना धूमत्वादिना च धूमादिकमालोकादिकंचावगाह मानयोरिच्छयोरालोकलिंगकानुमित्यादौ प्रतिबन्धकत्वतदभावयोरापत्तेः । द्रव्येणानुमिनुयामित्यादीच्छाया आलोकलिंगकानुमित्यविरोधित्वोपपत्तये चालोकत्वाद्यवच्छिन्नत्वस्थाने आलोकाद्यवृत्तित्वेनाज्ञायमानधर्मावच्छिन्नत्व

मेव निवेश्यम्; द्रव्यत्वादेरालोकत्वादिविरुद्धत्वभ्रमदशायां तादृशेच्छाया विरोधित्वोपपादनाय आलोकत्वादेरालोकादिवृत्तित्वज्ञानशून्यकालीनाया आलोकेनानुमिनुयामित्यादीच्छाया अविरोधित्वोपपत्तये च वास्तवालोकादि वृत्तित्वस्य तेन रूपेण ज्ञायमानत्वस्य चोपेक्षणम् । धूमत्वादेरालोकाद्यवृत्ति त्वाग्रहदशायां धूमेनानुमिनुयामितीच्छाया आलोकादिलिंगकानुमित्यविरो धित्वमिष्टमेव, विरोधित्वं च तादृशेच्छाया धूमत्वादावालोकत्वादि विरुद्धत्वग्रहदशायामेव ।

वस्तुतस्तु- द्रव्यं नालोक इत्यादिज्ञानशून्यकालीनानामालोको द्रव्यमित्या दिज्ञानकालीनानां वा इच्छानां तत्तद्व्यक्तित्वेन भेदकूट एव स्वातन्त्र्येण प्रतिबन्धकतावच्छेदके अनुप्रवेशनीयः, तेनोक्तकल्पे कालान्तरीणपुरुषा न्तरीणज्ञानवारणाय स्वसमानकालीनत्वस्वसमानाधिकरणत्वयोः ज्ञान विशेषणत्वप्रौव्ये स्वपदेन फलीभूतानुमित्युपादाने यादृशयादृशानुमिति दशायां क्वचिदपि धर्मे नालोकावृत्तित्वज्ञानं प्रसिद्ध्यति, तत्र स्व समानाधिकरणस्वसमानकालीनालोकत्वादिविरुद्धत्वज्ञानाविषयधर्मवल्लिङ्गकत्व प्रकारकानुमित्साभिन्नानुमित्साभावरूपकारणाप्रसिद्धिः, स्वत्वाननुगमेन कार्य कारणभावस्य तत्तद्व्यक्तिविश्रामश्च; भेदप्रतियोग्यनुमित्सोपादाने च आलोकेन द्रव्येण वानुमिनुयामित्याद्याकारकयादृशेच्छासमानाधिकरणसमान कालीनज्ञानाप्रसिद्धिः, तादृशेच्छायास्तथाविधभिन्नत्वेनालोकलिङ्गकानुमिति प्रतिबन्धकत्वापत्तिरिति परास्तम् । यद्वा- आलोको द्रव्यमित्यादिज्ञान विशिष्टद्रव्यत्वादिमल्लिङ्गकत्वप्रकारकेच्छात्वेन आलोको न द्रव्यमित्यादिज्ञान विरहविशिष्टतादृशेच्छात्वेनैव वा द्रव्यत्वादिमल्लिङ्गकत्वप्रकारकेच्छाः अनु गमय्य तद्भेदाः प्रतिबन्धकतावच्छेदके निवेशनीयाः; वैशिष्ट्यं चैक- क्षणावच्छिन्नैकात्मवृत्तित्वम्, भेदस्य कालिकाव्याप्यवृत्तित्वोपगमात्तादृशज्ञान शून्यकालीनानां द्रव्येणानुमिनुयामित्यादीच्छानां विशिष्टभिन्नतया प्रतिबन्ध-

कत्वोपपत्तिः. द्रव्यत्वावच्छिन्नेनानुमिनुयामित्याद्याकारिकाणां द्रव्यत्वांशे लिंगतावच्छेदकत्वावगाहिनीनां तु न द्रव्यत्वादिमद्विषयकपरामर्शजन्यत्वरूपद्रव्यत्वादिमल्लिंगकत्वप्रकारकत्वम् , विषयतायामेव तत्र द्रव्यत्वाद्यवच्छिन्नत्वभानाल्लिंगांशे द्रव्यत्ववत्त्वानवगाहनात्; अतस्तथाविधेच्छानामालोकत्वाद्यवच्छिन्नलिंगकानुमितिविरोधित्वमक्षतमेव , आलोकत्वाद्यवच्छिन्नेनानुमिनुयामित्यादीच्छानां तादृशानुमित्यविरोधित्वोपपत्तये चालोकत्ववल्लिंगकत्वाद्यप्रकारकत्ववदालोकत्वाद्यवच्छिन्नलिंगकत्वाद्यप्रकारकत्वमप्यालोकत्वाद्यवच्छिन्नानुमितिप्रतिबन्धकतायां निवेशनीयम्; पर्वते वह्निमनुमिनुयामित्याकारकलिंगविशेषजन्यत्वानवगाहीच्छानामविरोधित्वोपपत्तये किंचिल्लिंगकत्वप्रकारकत्वनिवेशनम् । तदर्थश्च किंचिल्लिंगकत्वप्रकारतानिरूपिततत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नविशेष्यताकत्वम्; अतो धूमेनेन्धनमनुमिनुयामित्याकारकेच्छानां नालोकादिलिंगकवह्न्याद्यनुमितिविरोधित्वम् ।

इदमत्रावधेयम् ;— आलोकलिंगकधूमलिंगकानुमितिर्जायतामित्याद्याकारकेच्छादशायां न केवलालोकपरामर्शादनुमितिः; तथाविधानुमितेस्तादृशेच्छाया अविषयत्वात् धूमालोकोभयलिङ्गकानुमित्युत्पत्त्यैव तादृशेच्छाविषयसिद्धेः । एवं धूमलिंगकवह्न्यनुमितिरालोकलिंगकवह्निघटोभयानुमितिश्च जायतामित्याद्याकारकेच्छाकाले घटाद्यनुमितिसामग्र्या असत्त्वे मालोकपरामर्शसत्त्वे वह्न्यनुमितिर्न जायते, घटाद्यविषयकानुमित्युत्पत्त्या तादृशेच्छाविषयासिद्धेः , अतस्तथाविधेच्छानां तत्र तत्र प्रतिबन्धकतानिर्वाहाय तल्लिङ्गकत्वतत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वादिप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताशून्यत्वमेव तल्लिंगकत्वाप्रकारकत्वेत्यनेन विवक्षणीयम् ; उक्तस्थले चालोकलिंगकत्वचवह्न्यनुमितित्वादिप्रकारतानिरूपितविशेष्यता तादृशप्रकारतातिरिक्तधूमलिंगकत्वादिप्रकारतानिरूपितैव ;

[दी] कामिनीजिज्ञासावत्

---

समूहालम्बन एव प्रकारताभेदेन विशेष्यताभेदात्; अन्यथा समूहालम्बनेच्छातस्तादृशेच्छावैलक्षण्यानुपपत्तेः । तथा च तादृशेच्छानां तथाविधप्रकारत्वानिरूपितविशेष्यताशून्यत्वेन प्रतिबन्धकत्वनिर्वाहः । आलोकेनानुमितिर्जायतां धूमेन पर्वते वह्निमनुमिनुयामित्याकारकसमूहालम्बनेच्छानां तादृशविशेष्यताशून्यत्वविरहेऽपि आलोकलिंगकान्यानुमितिसामग्रीकालीनतथाविधेच्छानां तत्तद्व्यक्तित्वेन पृथक्प्रतिबन्धकत्वोपगमान्न तादृशानुमितिसामग्रीदशायां तादृशेच्छाबलादालोकलिंगकानुमित्यापत्तिः. पर्वते वह्निमनुमिनुयां धूमेन च पर्वते वह्निमनुमिनुयामित्याकारकसमूहालम्बनेच्छायाः प्रामाणिकत्वे तत्रालोकपरामर्शादनुमितिर्भवत्येव; एवं च लिंगविशेषजन्यत्वानवगाहीच्छानां विशेषणदळेनैव वारणे धूमेन घटमनुमिनुयामित्याकारकेच्छावारणमेव विशेष्यदळप्रयोजनम् । तदर्थश्च न किंचिल्लिङ्गकत्वप्रकारतानिरूपिततत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नविशेष्यताकत्वम्; तथा सति धूमेनानुमिनुयामित्याकारकविषयविशेषानुपरक्तानुमितीच्छानामसंग्रहापत्तेः । किन्तु किंचिल्लिंगकत्वतत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वादिप्रकारताभिन्न प्रकारत्वानिरूपित विशेष्यताकत्वमेव विशेष्यदळेन विवक्षणीयम् । धूमेन घटमनुमिनुयामितीच्छावद्धूमेन वह्निघटोभयमनुमिनुयामित्यादीच्छाया अप्यालोकलिंगकवह्न्याद्यनुमित्यविरोधित्वमिष्टमेव । सिद्धौ च तादृशेच्छाया अनुत्तेजकतया सिद्धिकाले तादृशेच्छाबलादसत्यामालोकलिंगकानुमितीच्छायां न तादृशानुमितिरिति दिक् ।

एकलिंगकेच्छाकालीनोभयलिंगकपरामर्शजन्यानुमितौ व्यभिचारवारणप्रकारश्च पुनरग्रे दर्शयिष्यते । ननु स्वविषयसजातीयज्ञाने इच्छाया विरोधित्वमदृष्टचरमित्यत आह- कामिनीजिज्ञासावदिति । यथा कामिनीप्रत्यक्षादिगोचरेच्छा घटादिविषयकप्रत्यक्षादौ प्रतिबन्धिका तथेत्यर्थः ।

[दी] पृथक्प्रतिबन्धिका; यदि च तत्रानुमितिः, तदा सिद्धिसत्त्वे तत्रानुमितिवारणाय तल्लिंगकानुमितीच्छा तदन्यमात्रलिंगकानुमितीच्छातिरिक्तानुमितीच्छा वा वाच्या ।

---

**पृथक्प्रतिबन्धिके**ति। पक्षतासमवधानदशायामनुमित्यनुत्पादप्रयोजिकेत्यर्थः। तथा चोक्तस्थले पक्षतासत्त्वेपि क्षतिविरहात्तदिष्टमेवेति भावः। ननु कामिनीजिज्ञासास्थले कामिनीभिन्नविषयकज्ञानानुत्पादस्य सर्वानुभवसिद्धतया तत्र तस्याः प्रतिबन्धकत्वमस्तु; सिद्ध्यसत्त्वे धूमादिलिंगकानुमितीच्छादशायामालोकलिंगकवह्न्यनुमित्यनुत्पादस्तु नानुभाविकः, तथा सति तुल्ययुक्त्या घटाद्यनुमित्साप्रत्यक्षादिगोचरेच्छादशायामपि तदनुत्पादस्य तथात्वप्रसक्तेः; नह्यत्र कमपि विशेषमीक्षामाहे इत्यभिसन्धायोक्तापत्तिवारणाय कल्पान्तरमनुसरति- **यदि चे**ति। तथा चान्यलिंगकानुमितीच्छायाः प्रतिबन्धकत्वमसम्भावितमेवेति भावः। **तत्रे**ति। अन्यलिङ्गकानुमित्सास्थल इत्यर्थः। **तल्लिंगकानुमितीच्छा**- तल्लिङ्गकत्वप्रकारतानिरूपिततत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वाद्यवच्छिन्नविशेष्यताकेच्छा। **वाच्या**— सिषाधयिषापदेन विवक्षणीयेत्यर्थः। नन्वेवं लिंगविशेषानुपरक्तानुमितीच्छाकाले सिद्धौ सत्यामनुमित्यनुपपत्तिरत आह- **तदन्यमात्रलिंगके**ति। धूमेनालोकेन च अनुमिनुयामित्यादिसमूहालम्बनेच्छाकाले आलोकादिलिंगकानुमित्युपपत्तये **मात्रे**ति। तथा च तल्लिंगकतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वाप्रकारका सती या किंचिल्लिंगकतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वादिप्रकारकेच्छा तदन्यतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वादिप्रकारकेत्यर्थः। लिंगविशेषोपरक्तानुमितीच्छासंग्रहाय सत्यन्तम्। आलोकेनेन्धनमनुमिनुयां धूमेन च वह्निमनुमिनुयामित्याकारकेच्छाबलादालोकलिंगकवह्न्यनुमित्यापत्तिवारणाय तत्र साध्यादिनिवेशः। लिंगविशेषानुपरक्तानुमितीच्छाकाले पर्वते वह्निमनुमिनुयां धूमेनेन्धनमनुमिनुयां इत्याद्याकारकसमू-

[ दी ] लिंगविशेषेणापि नियन्त्रितं पक्षत्वम् ।

---

हालम्बनेच्छाकालेचालोकादिलिङ्गकवह्न्यनुमित्युपपत्तये विशेष्यदळम् ।
यत्किंचिद्धोचरं ज्ञानं जायतामितीच्छावारणाय चरमदळम । यद्यप्या
लोकधूमोभयलिंगकवह्निविशिष्टपर्वतविषयकानुमितिर्जायतामालोकेन वह्नि
घटोभयविशिष्टपक्षविषयकानुमितिर्धूमेन वह्निविशिष्टपर्वतविषयकानुमितिश्च
जायतामित्यादीच्छावारणाय तल्लिंगकत्वतत्साध्यविशिष्टतत्पक्षविषयकानुमिति
त्वादिप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकान्यत्वमेव सत्यन्तेन विव-
क्षणीयम्; तथा च लिङ्गविशेषानुपरक्तानुमितीच्छायां तादृशविशेष्यता
कान्यत्वविरहात्किंचिल्लिङ्गकत्वादिप्रकारकत्वानिवेशनमफलमेवेति तथाविध
विशेष्यताशालित्वेनैवेच्छायाः उत्तेजकत्वमुचितम्; तथापि तादृशविशे
ष्यताशालीच्छायामेव **तदन्यमात्रे** त्यादिग्रन्थतात्पर्यमिति । शेषं पूर्वोक्त
दिशाऽवसेयम् । धूमालोकोभयलिङ्गकानुमितौ च धूमलिंगकत्वालोकलिंगकत्व
तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वादिप्रकारताभिन्नप्रकारत्वानिरूपितवि-
शेष्यताशालीच्छात्वेन स्वातन्त्र्येणोत्तेजकत्वम्; तेनोभयलिंगकानुमिती
च्छादशायां उभयलिंगकपरामर्शादनुमित्युपपत्तिः; धूमालोकभस्मभिरनु
मिनुयामित्यादीच्छाकाले तदुभयलिंगकपरामर्शादनुमित्यापत्तिवारणञ्च ।

नन्वेवं धूमालोकलिङ्गकानुमितिसाधारणैकपक्षताया असम्भव इत्य
त्रेष्टापत्तिमाह— **लिङ्गविशेषेणापी** ति । लिंगभेदेनापि पक्षत्वं भिन्नमेवे
त्यर्थः । अपिः साध्यादिभेदसमुच्चायकः । तत्प्रदर्शनं च दृष्टान्तार्थम् ।
तथा च साध्यादिभेदेनेव लिंगभेदेनापि पक्षताभेदो न क्षतिकर इति भावः ।
नन्वेवं लिंगभेदेन पक्षताया अननुगमात्तस्या व्यभिचारेणानुमितिरूपानुगत
कार्ये हेतुत्वासम्भवः; न च तत्तत्साध्यकत्वादिवत्तत्तल्लिंगकत्वस्यापि कार्यता
वच्छेदके निवेशान्न व्यभिचार इति वाच्यम्; तावताप्यालोकादिलिंगका
नुमितीच्छाधीनधूमालोकोभयादिविषयकसमूहालम्बनपरामर्शजन्यानुमितौ धू-

मादिलिंगकानुमितीच्छाविरहविशिष्टसिद्ध्यभावव्यभिचारस्य दुर्वारत्वात्ता दृशानुमितावपि धूमादिलिङ्गकपरामर्शजन्यत्वरूपधूमलिंगकत्वस्याक्षतत्वात् । न च यत्र धूमलिंगकानुमितीच्छाया उत्तेजकता तत्रालोकलिङ्गकानुमिती च्छानामपि तत्तल्लिंगकपरामर्शविशिष्टानामुत्तेजकत्वोपगमान्नोक्तस्थले व्यभि चार इति वाच्यम्; तथा सति तत्तद्धूमलिङ्गकेच्छाया अपि धूमलिङ्गक परामर्शविशिष्टाया एवोत्तेजकत्वौचित्यात्; सर्वसाधारणैकपक्षताया एव सुवचतया लिंगविशेषेणापीति ग्रन्थासङ्गतिरिति चेन्न; धूमलिंगकेच्छा विरहविशिष्टसिद्धिविशिष्टान्यानुमितित्वमेव तादृशसिद्ध्यभावजन्यतावच्छे दकम्; तादृशसिद्धिविशिष्टत्वं च स्वसामानाधिकरण्यावच्छिन्नस्वाव्यवहितो त्तरोत्पत्तिकत्वसम्बन्धेन. उक्तसमूहालम्बनस्थलीयानुमतिस्तु तथाविधसि द्धिविशिष्टैवेति न तत्र व्यभिचारः, सिद्धिकाले असत्यां तल्लिंगकसिषाध यिषायामुक्तस्थल इव न धूमपरामर्शादनुमित्यापत्तिः धूमादिलिंगकेच्छा विरहविशिष्टसिद्ध्यभावघटितधूमादिपरामर्शघटितकारणस्तोमस्यैव कार्यो त्पत्तिप्रयोजकत्वोपगमात्समूहालम्बनस्थले आलोकपरामर्शादिघटितसामग्रीत एव कार्योत्पत्तिनिर्वाहात् ।

अथात्र अव्यवहितोत्तरत्वमवश्यं तृतीयक्षणसाधारणं स्वध्वं साधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपं वाच्यम्; अन्यथा यत्र क्रमेण सिद्ध्यात्मकधूमालोकोभयलिङ्गकपरा मर्शधूमलिंगकेच्छानुमितयः तत्रानुमित्युत्पत्त्यधिकरणक्षणस्यालोकलिङ्गकेच्छा विरहविशिष्टसिद्ध्यधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वेन तदुत्पत्ति कानुमितेरुक्तसम्बन्धेन तादृशसिद्धिविशिष्टान्यत्वात् तादृशसिद्ध्यभावस्य व्यभिचारतादवस्थ्यात्; एवं च यत्र क्रमेण सिद्ध्यात्मकधूमपरामर्शधूम लिंगकेच्छानुमितयः तत्रत्यानुमितेर्धूमादिलिंगकेच्छाविरहविशिष्टसिद्धिविशि ष्टत्वेन पक्षताकार्यानुपपत्तिरिति चेन्न;— तादृशसिद्धिविशिष्टत्वं तादृश

स्वाधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणोत्पत्तिकत्वसम्बन्धेन वाच्यम्; उक्त समूहालम्बनस्थले च अनुमित्यव्यवहितपूर्वक्षणस्यालोकलिंगकेच्छाविरह विशिष्टसिद्ध्यधिकरणत्वात्तादृशक्षणध्वंसोत्पत्त्यधिकरणक्षणोत्पत्तिकत्वमनुमिते रिति न व्यभिचारः. एवं सिद्ध्यात्मकधूममात्रपरामर्शजन्यानुमितेर्धूमलिं-गकेच्छाविरहविशिष्टसिद्ध्यधिकरणप्रथमक्षणध्वंसोत्पत्त्यधिकरणक्षणोत्पत्तिक-त्वाभावात्पक्षताकार्यत्वानिर्वाहः । अथ वा स्वाव्यवहितपूर्वकालावच्छिन्न तल्लिंगकेच्छाविरहविशिष्टसिद्ध्यभावाधिकरणताविशिष्टसमवाय एव तादृश सिद्ध्यभावकार्यतावच्छेदकसम्बन्ध इति न कोपि दोषः । अथ वा स्व वृत्तिकृतिमत्त्व स्ववृत्तिप्रागभावप्रतियोगित्व स्वसामानाधिकरण्यैतत्त्रितय सम्बन्धेन तादृशसिद्धिविशिष्टान्यत्वं तादृशसिद्ध्यभावजन्यतावच्छेदक मिति न कोपि दोषः । अथ वा तादृशसिद्धिविशिष्टत्वं तादृशस्वाधिकरण क्षणत्वावच्छिन्नध्वंसाधिकरणक्षणोत्पत्तिकत्वसाहित्योत्तरत्वसम्बन्धेन वाच्यम्; उक्तसमूहालम्बने च तादृशसिद्ध्यधिकरणक्षणत्वावच्छिन्नध्वंसाधिकरणमनु मित्युत्पत्तिक्षण एवेति तद्ध्वंसानधिकरणक्षणोत्पत्तिकत्वमनुमितेरिति न व्यभिचारः । सिद्ध्यात्मकधूममात्रपरामर्शजन्यानुमितेर्धूमलिंगकेच्छाविरह विशिष्टसिद्ध्यधिकरणक्षणत्वावच्छिन्नध्वंसाधिकरण द्वितीयक्षणध्वंसानधिकरण क्षणोत्पत्तिकत्वविरहात्तद्विशिष्टसिद्धिविशिष्टान्यत्वमव्याहतमेवेति ।

एवं यत्र धूमपरामर्शानन्तरं तदप्रामाण्यावगाह्यालोकपरामर्शस्तदु त्तरमनुमितिस्तत्रानुमितेरप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शविशिष्टत्वरूपा प्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शजन्यतावच्छेदकाक्रान्तत्वादव्यवहितपूर्व क्षणे चाप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शासत्त्वेन प्रसक्तस्य व्यभिचा रस्य एतादृशैर्वर्त्मभिरेव वारणमवसेयम् । लिंगोपधानमते च न कदा चिदप्यनुमित्यनुपपत्तिः, तन्मते धूमविशिष्टपर्वतत्वाद्यवच्छिन्नविशेष्यकत्व व्यनुमितित्वादेरेव धूमलिंगकेच्छाविरहविशिष्टसिद्ध्यभावजन्यतावच्छेदक

[ दी ] तल्लिंगकानुमितौ सिद्धिकालीनतल्लिंगकानुमितीच्छाविरह विशिष्टान्यलिंगकानुमितीच्छैव वा प्रतिबन्धिका ।

---

स्वादुक्तसमूहालम्बनस्थले च आलोकवान् पर्वतो वह्निमानित्याकारकानुमिते रेवोपगमेन व्यभिचारानवकाशादिति ।

धूमेनानुमिनुयां आलोकेनानुमिनुयामित्यादिसकलेच्छासाधारणरूपे णैव सिषाधयिषाणां सिद्ध्यावुत्तेजकत्वम ; तथा च धूमालोकादिलिंगक निखिलानुमितिसाधारणी एकैव पक्षता ; उक्तस्थलेऽतिप्रसङ्गभङ्गाय च प्रतिबन्धकान्तरमेव कल्प्यत इत्याशयेनाह- तल्लिंगके ति । असत्यां सि द्धावन्यालिंगकानुमितीच्छासत्त्वे अनुमित्युपपत्तये सिद्धिकालीने ति । सामानाधिकरण्यसम्बन्धेन सिद्धिविशिष्टेत्यर्थः । समूहालम्बनेच्छाकाले सि द्धिसत्त्वे अनुमित्युपपत्तये तल्लिंगकानुमितीच्छाविरहविशिष्टे ति । तल्लिंगकत्वादिप्रकारतान्यप्रकारत्वानिरूपितविशेष्यताकेच्छाविरहविशिष्टार्थ- कम् । तेन धूमालोकोभयलिंगकवह्न्यनुमितिर्जायतामित्याद्याकारकेच्छाबला त्सिद्धिकाले न केवलालोकलिंगकानुमितिप्रसंगः ; न वा आलोकेन वह्नि ?टोभयानुमितिः; धूमेन वह्न्यनुमितिर्जायतामित्येतादृशेच्छाकाले सिद्धिसत्त्वे केवलालोकादिपरामर्शात्केवलवह्न्याद्यनुमित्यापत्तिः । यद्यपि तादृशप्रकार त्वानिरूपितविशेष्यताकान्यत्वस्येच्छाविशेषणत्वोपगम एव समूहालम्बन स्थले अनुमितिरुपपादयितुं शक्यते, तथापि ज्ञानेच्छयोर्युगपदुत्पाद मङ्गीकुर्वतां नवीनानां मते यत्र सिद्ध्युत्पत्तिकाले धूमलिंगकानुमितीच्छा यास्तद्द्वितीयक्षणे च आलोकलिङ्गकेच्छाया उत्पादस्तत्रालोकलिंगकानु मित्युत्पत्तये तादृशविशेष्यताशालीच्छाविरहविशिष्टपर्यन्तानुधावनम् । लिंग विशेषानुपरक्तानुमितीच्छानामपि निरुक्तोत्तेजकतावच्छेदकाक्रान्ततया ता दृशेच्छायाः प्रतिबन्धकत्वाप्रसक्तेः अन्यालिंगके ति सम्पातायातम् ।

सिद्धिविशिष्टेच्छामात्रस्य प्रतिबन्धकत्वे सिद्धिविशिष्टघटतदनुमित्यादि गोचरेच्छाकालीनाननुगतेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेनाभावानां निवेशनीयतया गौरवमिति तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकानुमितीच्छात्वेनैव विशेष्यीभूतेच्छानिवेशो बोध्यः ।

वस्तुतस्तु तत्साध्यविशिष्टतत्पक्षविषयकत्वादिप्रकारकत्वादिकमपि अन्यलिंगकेच्छायां न निवेश्यम्, घटादीच्छाकालीनाननुगतेच्छानां भवन्मतेपि सिद्धावुत्तेजकताया वक्तव्यतया साम्यात्. मन्मते तत्र घटादीच्छासाधारणरूपेणैवानुमितीच्छाया उत्तेजकत्वोपगमादुक्तस्थले पक्षतानिर्वाहेण तादृशाननुगतेच्छानां अन्यलिङ्गकेच्छायामेवोत्तेजकत्वात् । अत्र च तादृशगुरुधर्मावच्छिन्नाभावस्य लिंगभेदेनानन्तकारणतानां पक्षताकारणतान्तरस्य च कल्पनामपेक्ष्य लिंगभेदेन तल्लिंगकानुमितीच्छाविरहविशिष्टसिद्धित्वरूपलघुधर्मावच्छिन्नाभावहेतुताकल्पनस्यैव साधुत्वेन पूर्वपक्षस्यैव सम्यक्तया वाकारोऽनिर्भरसूचनायेति वदन्ति ।

परे तु अन्यलिंगकत्वप्रकारकानुमित्सासमवहितसिद्धिदशायामननुगतानुमित्साबलात्तल्लिंगकानुमित्युपपत्तये सिद्धौ तादृशेच्छाभावकूटवैशिष्ट्यनिवेशेन पूर्वमते गौरवम्, एतन्मते चान्यलिंगकानुगतानुमित्सारूपोत्तेजकबलादेव तत्रानुमित्युपपत्तौ सिद्धौ तादृशाभावानिवेशात् । न चैतन्मतेप्यन्यलिंगकानुगतानुमित्साप्रतिबन्धकतायामेव तासामुत्तेजकत्वस्यावश्यकतया साम्यमिति वाच्यम्, यतो यत्राननुगतसाध्यानुमित्सात्मकसमूहालम्बनेच्छारूपा एवान्यलिंगकानुमितीच्छाः तत्रान्यलिंगकानुमितीच्छायां तादृशेच्छाव्यक्तिभेदा एव निवेशनीयाः, सिद्धौ तु सामानाधिकरण्यसम्बन्धेन तदत्यन्ताभावस्तत्र च तत्कालीनसंयोगादिव्यक्तीनामभावनिवेशनमादाय विनिगमनाविरहेण गौरवम्. न च पूर्वमतेपि तत्तत्सिद्धिव्यक्तिभेदा एव सिद्धौ निवेशनीयाः, न तु तदिच्छाभाव इति न विनिगमनाविरहावकाश

[ दी **साधकमानम्**-साध्य[वत्ता]निश्चयः। पाषाणमयत्वादिना पर्वते तेजस्त्वादिना वह्नेः सिद्धावपि पर्वतत्वेन तत्र वह्नित्वेन तस्यानुमितेर्धर्मित्वसाध्यत्वयोरवच्छेदकावनुप्रवेशनीयौ;

---

इति वाच्यम् ; सिद्धेरनन्तरं यत्र यत्र तादृशसमूहालम्बनेच्छाव्यक्तीनामुत्पत्तिस्तत्र तत्र तादृशसिद्धिभेदानां सिद्धौ निवेशे इच्छोत्पत्तिकाले अनुमित्यापत्तेः . ज्ञानेच्छयोर्युगपदुत्पादमते इच्छासामग्र्या ज्ञानाविरोधित्वात् . यादृशस्थले च सिद्धिजननकाले प्रतिबन्धकोत्तेजकेच्छयोरेकस्या अपरव्यक्तेश्च तत्पूर्वमुत्पत्तिस्तत्र द्वितीयक्षणे अनुमित्युपपत्तये एतन्मतेपि तत्तत्सिद्धिभेदाः अन्यलिंगकेच्छाविशेषणीभूतसिद्ध्यंशे निवेश्यन्ते , न त्वन्यलिंगकेच्छायां तद्विशेषणसिद्धौ वा तदिच्छात्यन्ताभावाः अतो न तत्तत्कालीनसंयोगादिव्यक्त्यभावनिवेशनमादाय विनिगमनाविरहप्रसङ्ग इत्याहुः ।

साधकमानपदस्य सिद्धिकारणपरत्वे पूर्वोक्तदोषप्रसङ्गात् तद्व्याचष्टे- **साधके** ति । **साध्य[वत्ता]निश्चयः**- प्रकृतपक्षसाध्यवैशिष्ट्यावगाहि निश्चयः । 'पाषाणमयो वह्निमान्पर्वतस्तेजस्वी' त्याकारकासमानप्रकारक निश्चयदशायां पर्वतो वह्निमानित्याकारकानुमितेरनुभवसिद्धतया यथाश्रुते च तदनुपपत्तेः प्रकारविशेषं निवेशयति- **पाषाणमयत्वादि** नेति । तत्र- पर्वते; **तस्य**- वह्नेः; **धर्मित्वसाध्यत्वयोः**- उद्देश्यत्वविधेयत्वयोः ; **अनुप्रवेशनीया** वित्यस्य "पक्षताशरीर" इत्यादिः । तथा च पर्वतत्वाद्यवच्छिन्नोद्देश्यतानिरूपितसंयोगादिसंसर्गावच्छिन्नवह्नित्वाद्यवच्छिन्नविधेयताकानुमितिं प्रति तद्रूपावच्छिन्नविशेष्यतानिरूपिततत्संसर्गावच्छिन्नतद्रूपावच्छिन्न प्रकारताशालिनिश्चयत्वावच्छिन्नस्य सिषाधयिषाविरहेण विशिष्टस्याभावो हेतुरिति पर्यवसितम् । पर्वतो वह्निमानित्यादिसिद्धिदशायां वह्निमान् पर्वतो घटवानित्याद्यनुमित्युदयात्प्रतिबध्यतावच्छेदककोटौ प्रकारतामुपेक्ष्य विधेय-

[ दी ] यदि च पर्वतत्वसामानाधिकरण्येन एकत्र साध्यसिद्धावपि विनानुमित्सां अन्यत्र

---

तानिवेशनम् । विषयता च वह्निमनुमिनोमीत्याद्यनुव्यवसायनियामकः पक्षतावच्छेदकव्यावृत्तो विषयताविशेषः । स्वरूपतः पर्वतत्ववह्नित्वादि प्रकारकसिद्धिदशायां जातिमान्वह्निमान् पर्वतो जातिमद्वानित्याद्यनुमित्यु त्पत्त्या, शुद्धपर्वतत्ववह्नित्वादिप्रकारकसिद्धिदशायां विषयिण्यास्तु न्दरपर्वतो वह्निमान्, पर्वतस्सुन्दरवह्निमानित्याद्यनुमितेरुत्पत्त्या च प्रतिबध्यादिशि पर्वतत्वावच्छिन्नेत्यादिना किंचिदविशेषितपर्वतत्वादिपर्याप्ता वच्छेदकताकत्वमेव विवक्षणीयम्; तदर्थश्च पर्वतत्वादिनिष्ठनिरवच्छिन्ना वच्छेदकतानिरूपकत्वम्. (तेन पर्वतो वह्निमानिति सिद्धिदशायां जातिमान्पर्वतो जातिमद्वह्निमानित्याद्यनुमितेर्नानुपपत्तिः.) पर्वतो वह्नि मानित्याद्यनुमितौ जातिमान्वह्निमान्पर्वतो जातिमद्वानित्यादिसिद्धेरप्रति बन्धकतया प्रतिबन्धकदिश्यपि पर्वतत्वावच्छिन्नेत्यादिना किंचिदविशेषित तत्तदवच्छिन्नत्वमेव विवक्षणीयम् । तदर्थश्च निरवच्छिन्नतद्वृत्त्यवच्छेदक ताकत्वमित्यवधेयम् ।

ननु पर्वतत्वावच्छिन्नविशेष्यताकानुमितौ पर्वतत्वावच्छिन्नविशेष्य ताकसिद्धेः प्रतिबन्धकत्वे पर्वतत्वेन एकपर्वतविशेष्यकसिद्धिदशायां तेन रूपेणान्यपर्वते साध्यानुमित्यनुदयापत्तिरत आह- यदि चेति । पर्वतत्वांशे अवच्छेदकत्वावगाहि यत्किंचिद्व्यक्तिविशेष्यकसिद्धिदशायां तेन रूपेण धर्म्यन्तरे अनुमित्यनुत्पादस्य निर्विवादतया सामानाधिकरण्येने ति । एकत्र—एकधर्मिणि । अनुमित्सासत्त्वे विशेषणाभावादेव विशिष्टाभाव निर्वाहात् धर्मिविशेषनिवेशनमफलमतो विनाप्यनुमित्सा मिति । अ- न्यत्र—अन्यधर्मिणि । धर्मिविशेषानन्तर्भावेपि वक्ष्यमाणरीत्या सामानाधि-

[ दी ] तादृशानुमितिरानुभाविकी, तदा धर्मिविशेषोपि निवेश्यः; नान्यथा ।

---

करण्येन सिद्धिदशायामवच्छेदकावच्छेदेनानुमितौ बाधकाभावात् तादृशे ति । सामानाधिकरण्यमात्रावगाहीत्यर्थः । धर्मिविशेषोपी ति । तथा च पर्वतत्वाद्यवच्छिन्नतत्तत्पर्वतनिष्ठोद्देश्यताकानुमितौ पर्वतत्वाद्यवच्छिन्नतत्पर्वतादिविशेष्यकसाध्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वमिति भावः । अन्यथा-तादृशानुमितेरानुभाविकत्वविरहे । धर्मिविशेषो निवेश्य इत्यनुषज्यते । अनुमितिर्द्विविधा, पक्षतावच्छेदकसाध्ययोस्सामानाधिकरण्यमात्रावगाहिनी, तयोरवच्छेद्यावच्छेदकभावावगाहिनी च । अत्रच्छेद्यावच्छेदकभावोपि क्वचित्स्वरूपसम्बन्धविशेषः; यथा मूलावच्छिन्नो वृक्षः संयोगीत्यादौ मूलादिसंयोगाद्योः, तत्रान्यादृशस्य तस्य दुर्वचत्वात् । तदवगाहिन्यामेव चानुमितौ पक्षतावच्छेदकदेशकालावच्छेदेन बाधग्रहस्य विरोधितया बाधस्यासिद्धि व्यभिचारासंकरं मणिकृद्व्यवस्थापयिष्यति । क्वचिच्च व्याप्यव्यापकभावः । यथा पृथिवी रूपवतीत्यादौ पृथिवीत्वादिरूपाद्योः, तत्र मणिकृतैव पृथिव्यामितरभेदानुमाने अंशे घटे सिद्धसाधनमाशंक्य सर्वा पृथिवी इतरभिन्नेत्युद्देश्यप्रतीतेरभावात्पक्षतावच्छेदकनानात्वे हि तदिति समाधानस्य वक्ष्यमाणत्वात् पक्षतावच्छेदकस्य साध्यांशे धर्मिपारतन्त्र्येण प्रकारस्या-वच्छिन्नत्वं सम्बन्धविधया भासते, अतोऽवच्छेदकावच्छेदेनानुमितेर्न पर्वतत्वाद्यवच्छिन्नवह्निमान् पर्वत इत्याद्याकारकता ।

अथ वा पक्षांशे सम्बन्धतया भासमानसाध्यसम्बन्धे सम्बन्धता-वच्छेदकतया पक्षतावच्छेदकावच्छिन्नत्वभानम् , पक्षतावच्छेदकावच्छि-न्नत्वविशिष्टसाद्ध्यीयत्वेनैव वा पक्षे तत्सम्बन्धभानमित्यन्यत्र विवेचितम् । अवच्छेदकावच्छेदेनानुमितिः पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहि सिद्धिदशायामपि जायते, न्यूनविषयकसिद्धिदशायामधिकानुमितेस्सर्वानुभवसिद्धत्वात् , अत एव यत्रावच्छेदकावच्छेदेनानुमितेरुद्देश्यता तत्र

[ दी ] पक्षतावच्छेदकस्य सामानाधिकरण्येन साध्यसिद्धौ सत्या मपि तदवच्छेदेनानुमितिदर्शनात् पक्षतावच्छेदकावच्छेदेन अनुमितिं प्रति तदवच्छेदेन सिद्धेः,

---

नांशतस्सिद्धसाधनं दोष इत्यतस्तदेवोपपादयति– पक्षतावच्छेदके ति। सामानाधिकरण्येन सामानाधिकरण्यमात्रेण । तदवच्छेदेन– पक्षतावच्छेदकावच्छेदेन । सिद्धेः– सिद्धेरेव । सामानाधिकरण्यमात्रावगाहि सिद्धेः प्रतिबन्धकत्वं एवकारव्यवच्छेद्यम् । अयं भावः, पर्वतो वह्निमानित्यादिसिद्धिदशायां पर्वतस्सुन्दरवह्निमानित्याकारकानुमितेरुत्पत्त्या विधेयतावच्छेदकतायाः पर्याप्तिः प्रतिबध्यतावच्छेदककोटौ निवेशनीया । एवं संयोगादिना वह्नेस्सिद्धावपि संयुक्तसंयोगादिना वह्न्याद्यनुमित्युत्पत्त्या संसर्गतावच्छेदकतायाः अपि पर्याप्तिर्निवेशनीया । एवं संयोगादिना साध्यस्य दण्डोपलक्षितपुरुषादेस्सिद्धावपि विशिष्टनिरूपितसंयोगादिना दण्डिपुरुषाद्यनुमित्युत्पत्त्या संसर्गतावच्छेदकताया अपि पर्याप्तिर्निवेशनीया । एवं चावच्छेदकावच्छेदेनानुमितौ शुद्धवह्नित्वादौ शुद्धसंयोगत्वादौ वा विधेयतावच्छेदकतायाः संसर्गतावच्छेदकताया वा अपर्याप्ततया तादृशानुमितेर्न सामानाधिकरण्यमात्रावगाहिसिद्धिप्रतिबध्यत्वमिति ।

प्राञ्चस्तु— व्यापकतायाः संसर्गतया भाने मानाभावात्पक्षतावच्छेदकाक्रान्तयावद्व्यक्तिविषयकानुमितिरेव पक्षतावच्छेदकावच्छेदेनानुमितिरिति वदन्ति; तन्मते मणिकारोक्तन्यायेन अंशतस्सिद्धसाधनस्यानुगतरूपावच्छिन्न नानाव्यक्तिपक्षकानुमितावदोषत्वे तत्र सामानाधिकरण्यमात्रावगाहिन्यास्सिद्धेरविरोधितया पक्षतावच्छेदकव्यापकोद्देश्यताकान्यत्वमेव सिद्धिसामान्यप्रतिबध्यतावच्छेदककोटौ निवेशनीयम् । नच विषयभेदेन विषयताभेदात् पक्षतावच्छेदकावच्छेदेनानुमितेर्विषयतानामपि प्रत्येकं पक्ष-

तावच्छेदकाव्यापकत्वमेवेति तादृशविषयतायाः नानाव्यक्तिपक्षस्थले अप्रसिद्धिरिति वाच्यम् ; उद्देश्यतासम्बन्धेन पक्षतावच्छेदकव्यापकान्यत्वस्यैवानुमितिविशेषणत्वोपगमात् । दीधितिकारस्यावच्छेदकावच्छेदेन अनुमिताववच्छेद्यावच्छेदकभावस्य क्वचित्स्वरूपसम्बन्धात्मकत्वेपि व्याप्यव्यापकभावस्यापि भानमेवानुमतम् , भागासिद्धेर्दोषत्वनिर्वाहार्थं पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकावच्छेदेन हेतुमत्ताज्ञानकारणताया आवश्यकत्वात ; शिखरविशिष्टपर्वतो वह्निमानित्यादौ शिखरे हेतोस्तत्सम्बन्धस्य वा अवच्छेदकताविरहेण हेत्वसिद्धेरावश्यकतेत्याशंक्य पक्षतावच्छेदके अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाहिन्यामनुमितौ तदवच्छेदेन हेतुमत्ताज्ञानस्य हेतुतायां भागासिद्धेर्दोषत्वार्थमुपगमेपि स्वरूपसम्बन्धरूपावच्छेदकत्वावगाहिन्यामनुमितौ पक्षतावच्छेदकावच्छेदेन हेतुमत्ताज्ञानापेक्षा नोपयत इति समाधानस्य स्वयं अवच्छेदकत्वयोर्वस्तुनोर्भेदा दित्यनेनाग्रे वक्ष्यमाणत्वात् ; एवं व्यापकताभानस्य तदननुमतत्वे पर्वतत्वसमानाधिकरण्येनैकत्र साध्यसिद्धा वित्यत्रैकत्रेत्यनेनैवावच्छेदकावच्छेदेन या सिद्धिस्तत्त्वाभावलाभे तल्लाभप्रयोजकस्य सामानाधिकरण्येने त्युपादानस्यानर्थक्याच्च । युज्यते चैतदेव मतम् । प्राचीनमतेप्युक्तयुक्त्या विधेयतावच्छेदकत्वादिपर्याप्तिनिवेशस्यावश्यकत्वात्तादृशोद्देश्यताकान्यत्वस्याधिकस्य निवेशनीयतया गौरवात् । एवं सिद्धिसामान्यशून्यतादशायां अवच्छेदकावच्छेदेनानुमितावुत्पद्यमानायां सिद्ध्यभावबलात्तत्कार्यतावच्छेदकीभूतपक्षतावच्छेदकव्यापकोद्देश्यताकान्यानुमितित्वावच्छिन्नस्यापत्तेश्च । अस्मन्मते च सिद्धिसामान्याभावकालीनायामवच्छेदकावच्छेदेनानुमितौ विशिष्टवह्नित्वे विशिष्टसंयोगत्वे वा पर्याप्तविषयताविशेष: इव शुद्धवह्नित्वे शुद्धसंयोगत्वे वा पर्याप्तोपि विषयताविशेषः स्वीक्रियते. एकज्ञानस्यैकत्र विषये विषयताद्वयोपगमे क्षतिविरहादिति सिद्धिसामान्याभावकार्यतावच्छेदकावच्छिन्नोत्पत्तिरिष्टैव । नचावच्छेदकावच्छेदेनानुमितौ व्यापकतायास्सं

स्सर्गतया भानोपगमे तादृशानुमितावबच्छेदकावच्छेदेन हेतुमत्ताज्ञानस्य पृथक्कारणत्वकल्पने गौरवम्; एतन्मते तत्तत्पर्वतोद्देश्यकानुमितौ तत्त त्पर्वतविशेष्यकपरामर्शस्य हेतुतया अर्थवशादेव यावत्पर्वतविषयकपरा मर्शा त्तथानुमितेरुत्पादात्तादृशानुमितौ परामर्शस्य स्वतन्त्रहेतुत्वाकल्पना व्यापकताया स्संसर्गविधया भानस्य क्वचिदप्यनभ्युपगमादिति वाच्यम्; यत्रैकः परामर्शो वर्तते कतिपयपर्वतविषयकः, अन्यश्च तदितरयावत्पर्वत विषयकस्तत्राप्यवच्छेदकावच्छेदेनानुमितेरुत्पादापत्तेः। नचेष्टापत्तिः; अव च्छेदकावच्छेदेन हेतुमत्ताज्ञानं विना अवच्छेदकावच्छेदेनानुमित्यनुत्पा दस्य सर्वसम्मतत्वात्तत्र च कस्यापि परामर्शस्य भवन्मतसिद्धाया अव च्छेदकावच्छेदेन हेतुमत्तावगाहिताया असम्भवात्। एवं यत्र पक्षता वच्छेदकताघटकसम्बन्धेन पक्षतावच्छेदकमवृत्ति तत्र तेन सम्बन्धेन पक्षता वच्छेदकाक्रान्ताप्रसिद्ध्या अनुमितिद्वैविध्यानुपपत्तिश्च तन्मते। अपिचा वच्छेदकावच्छेदेनानुमितेः अवच्छेद्यावच्छेदकभावरूपाधिकविषयानवगा- हित्वे सामानाधिकरण्यमात्रेण सिद्धिदशायां तादृशानुमितेरुत्पत्तौ बीजा भावः; सिद्ध्यविषयीभूतधर्मिविषयकत्वस्य तद्बीजत्वे तथाविधसिद्धिदशायां सिद्ध्यविषयकतिपयपर्वतादिविषयकानुमितेरप्युत्पादौचित्यात्।

अथ मणिकृता पक्षतावच्छेदकैक्ये अंशतस्सिद्धसाधनस्यादोषत्वोप गमेपि तदितरप्राचीनैरनुमितिमात्र एवांशतस्सिद्धसाधनस्यापि दोषत्व मुपेयते; अत एव तेषां मतमालम्ब्य मणिकृतापि शब्दानित्यत्वानुमाने ध्वन्यादावंशतस्सिद्धसाधनवारणाय वर्णात्मकत्वादिविशेषणं पक्षे निवे शितम्, अत एव गन्धादिरूपपक्षतावच्छेदकस्य पृथिव्यामितरभेदादौ साध्ये हेतुता नाचार्यैरनुमन्यते. व्याप्तिग्रह एव हेतुरूपपक्षतावच्छेदक साध्ययोस्समानाधिकरण्यभानेन सिद्धसाधनात्सकलपृथिवीविषयकानुमिते रप्ययोगात्। नचांशतस्साध्यसिद्धावप्यधिकधर्मिविषयकतया यावत्पर्वतादि

विषयकानुमित्युत्पाद उचितः, अविकधर्मिविषयकानुमितेऽसिद्धिदशायामुत्पादे च वागनित्येत्यादिसिद्धिदशायामानित्ये वाङ्मनसे इत्यादिसमूहालम्बनानुमित्युत्पादस्याप्यौचित्यात्, न हि तत्र कस्याप्यनुमितिरभिमता; नवीनैरपि पक्षतावच्छेदकैक्य एवांशतस्सिद्धसाधनस्यादोषत्वोपगमात्. एवं च नवीनमत एवावच्छेदकावच्छिन्नत्वावगाहितदनवगाह्यनुमितिभेदेन पक्षताद्वयस्य स्वीकरणीयतया गौरवम्। न च विशिष्टबुद्धौ, धर्मितावच्छेदकव्यापकत्वभानानुपगमे पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिबाधदशायां तत्सामानाधिकरण्येन तादृशबाधाविषयधर्मिविषयिण्याः कतिपयधर्मिविशेष्यकानुमितेरिव सकलधर्मिविषयकानुमितेरप्युत्पादौचित्यात् अवच्छेदकावच्छेदेनानुमितावुद्देश्यायामप्यंशतो बाधस्यादोषतापत्तिरिति वाच्यम्, सामानाधिकरण्यमात्रावगाहिन्यां विशिष्टबुद्धौ समानविषयकतथाविधविपरीतनिश्चयप्रतिबन्धकतायाः प्राचीनानुमततया अंशतो बाधस्य दोषतोपपत्तेः. एवं च यावत्पक्षविषयकानुमितौ यावत्पक्षविशेष्यकहेतुमत्ताज्ञानापेक्षया तद्विरोधितया भागासिद्धेरपि दोषतानिर्वाहः। एवं यत्र सकलपर्वतानां नैकपरामर्शविषयता, अपि तु परामर्शद्वयविषयता. तत्र यावत्पर्वतविषयकानुमितिरूपावच्छेदकावच्छेदेनानुमितिः प्राचीनमते इष्टैव. (नवीनमतेपि तत्र तादृशानुमितेरावश्यकत्वादिति.) अवच्छेदकावच्छेदेनानुमितौ तादृशपरामर्शस्य हेतुत्वाकल्पनेनाप्येतन्मते लाघवम्; मैवम्. अवच्छेदकावच्छेदेन विशिष्टबुद्धौ व्यापकत्वभानानुपगमे व्यापकत्वभानस्य सामानाधिकरण्येन विपरीतज्ञानप्रतिबन्धकत्वप्रयोजकत्वासम्भवेन तत्प्रयोजकस्य दुर्वचतापत्तेः। न चैव.रूप्येण समानधर्मिविषयकत्वमेव विपरीतज्ञानप्रतिबन्धकत्वे बीजम्; तथा सति पार्थिवगन्धत्वाद्यवच्छेदेन जलावृत्तित्वादिनिश्चयस्यापि शुद्धगन्धत्वाद्यवच्छेदेन तन्निश्चयस्यैव गन्धो जलवृत्तिर्नवेत्यादौ गन्धत्वसामानाधिकरण्यमात्रेण जलवृत्तित्वादिसंशये विरोधितापसङ्गा

[ दी ] तत्सामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रस्यैव विरोधित्वम् ।

---

दुभयोरेव निश्चययोर्गन्धत्वादिना तदाश्रययावद्धर्मिणि आद्याभावावगाहिताया अविशेषात् . विरोधिविषयकत्वाविशेषे धर्मितावच्छेदककोटाव-धिकभानस्याविरोधिताबीजत्वाभावात् । द्वितीयस्य विरोधित्वे प्रथम-स्यापि तथात्वौचित्यात् । नव्यमते उभयनिश्चयविषयव्या पकतयोर्भेदेन विशेषसम्भवात् । एतेनावच्छेदकावच्छेदेनानुमितौ व्याप कत्वभानापेक्षया लाघवात् यावद्धर्मिवृत्त्यखण्डैकविषयताभ्युपगम एवो चितः, तदन्यविषयतैव सिद्धिसामान्यप्रतिबध्यतावच्छेदिका; सिद्धिसामा न्याभावकालीनानुमितौ च तादृशैकधर्मिमात्रवृत्तिविषयतापीष्यत इति न कोपि दोष इति परास्तम् ।

पक्षतावच्छेदकसामानाधिकरण्येन तदवच्छेदेन च वह्निसिद्धिदशायां सामानाधिकरण्यमात्रावगाहिन्यनुमितिर्न जायते, उभयोरेव सिद्ध्योः पक्षतावच्छेदकवति साध्यसम्बन्धरूपतदुभयसामानाधिकरण्यावगाहितया तादृशानुमितेस्तदतिरिक्तानवगाहित्वात् ; अतस्तथाविधानुमितावुभयविध सिद्ध्योरेव प्रतिबन्धकत्वं दर्शयति— **तत्सामानाधिकरण्येनेति** । **तत्सामानाधिकरण्यमात्रेण**— पक्षतावच्छेदकसामानाधिकरण्यमात्रेण । अवच्छेदकावच्छेदेनानुमितेरपि सामानाधिकरण्यावगाहितया तद्व्यावर्त नायावच्छेद्यावच्छेदकभावावगाहित्वव्यवच्छेदार्थकं मात्र पदम् । अवच्छे द्यावच्छेदकभावानवगाहित्वं च न सिद्ध्यभावजन्यतावच्छेदककोटौ निवे शनीयम् ; उक्तादिशाऽऽपत्तिसम्भवात ; पर्याप्तिनिवेशादेवोपपत्तेर्वैयर्थ्याच्चेत्य वधेयम् । **सिद्धिमात्र स्येति** । मात्र पदं कृत्स्नार्थकम् । तथा च पक्षता वच्छेदकावच्छेदेन तत्सामानाधिकरण्येन च सिद्धेरित्यर्थः । प्रतिबन्धकता चोभयविधसिद्ध्योः संसर्गतादीनां पर्याप्तिमनिवेश्यैकरूप्येणैव यद्युभय साधारणनिश्चयत्वं शक्यते निर्वक्तुम्; अन्यथा पुनः पृथक्पृथगेवेतिध्येयम्।

[ दी ] इत्थं च लिङ्गभेदन्यायोऽप्यनुसरणीयः ।

---

यत्तु सामानाधिकरण्येनानुमितौ तथाविधसिद्धेरवच्छेदकावच्छेदेन सिद्धिव्यावृत्तरूपेण प्रतिबन्धकत्वेपि तत्रावच्छेदकावच्छेदेन सिद्धेर्न प्रतिबन्धकताधिक्यम् , अवच्छेदकावच्छेदेनानुमितौ तस्यापि प्रतिबन्धकत्वे कल्पनीये अवच्छिन्नसंयोगादिपर्याप्तसंसर्गताकत्वस्य प्रतिबध्यतावच्छेदके अवश्यं निवेशनीयतया अवच्छिन्नत्वातिरिक्तधर्मानवच्छिन्नसंयोगादिनिष्ठ संसर्गताकत्वस्यैव च तदर्थतया शुद्धसंयोगादिसंसर्गकानुमितिसाधारण्येन तादृशप्रतिबन्धकतयैवोपपत्तिरिति ; तदसत्- सामानाधिकरण्येनानुमिनुयामवच्छेदकावच्छेदेनानुमिनुयामित्याद्याकारकेच्छानां पृथगुत्तेजकताया वक्ष्यमाणतया पृथक्प्रतिबन्धकताकल्पनस्यावश्यकत्वात् ।

ननु सिद्धिदशायां पक्षतावच्छेदकावच्छेदेनानुमिनुयामित्याकारकसिषाधयिषासत्त्वे असति चावच्छेदकावच्छेदेन हेतुमत्तापरामर्शे सामानाधिकरण्यमात्रावगाहिपरामर्शात्तादृशानुमित्यापत्तिः, तथाविधसिषाधयिषासत्त्वेन पक्षतायाः अक्षतत्वादित्यत आह इत्थंचे ति । इत्थंच- उक्तयुक्त्या पक्षतावच्छेदकावच्छिन्नत्वतत्सामानाधिकरण्यमात्रावगाह्यनुमित्योः सिद्ध्योः पृथक् पृथक्प्रतिबन्धकत्वे च । लिंगभेदन्याय इति । यथा तत्तल्लिङ्गकानुमितौ सिद्धेः प्रतिबन्धकतायां तत्तल्लिङ्गकानुमितीच्छैवोत्तेजिका, न त्वन्यविधानुमितीच्छा, तथा पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिनीमनुमितिं प्रति सिद्धेः प्रतिबन्धकतायां तादृशानुमितीच्छैव उत्तेजिका, नत्वन्यविधानुमितीच्छेति स्वीकरणीयमिति नातिप्रसङ्ग इत्यर्थः । यदि पर्वते वह्निरित्याकारकसाध्यनिश्चयानन्तरं पर्वतो वह्निमानित्याद्याकारिकानुमितिर्जायते, तदा साध्यविशेष्यकानुमितौ साध्यविशेष्यकसिद्धेः प्रतिबन्धकत्वेपि सामान्यतः साध्यपक्षवैशिष्ट्यावगाह्यनुमितौ तादृशसिद्धित्वेन नैकं प्रतिबन्धकत्वं कल्पनीयम् , अपि तु विशिष्यैव प्रतिबन्धकता

[ दी ] साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिकत्वे तां प्रति पक्षविशेष्यिकैव सिद्धिर्विरोधिनी; एवं च पक्षविशेष्यक सिद्ध्यनन्तरमपि साध्यविशेष्यकानुमितिर्जायते तुल्यन्यायात्। समानाकारकसिद्धेः प्रतिबन्धकत्वे पर्यवसानात् ।

---

द्वयम्, अगत्या गौरवस्यादोषत्वादित्याशयेनाह- साध्यविशेष्यके ति। द्वयोस्समानविषयकत्वे विशेषणविशेष्यभावे वैपरीत्यमकिंचित्करमित्यभिप्रायेणानिर्भरसूचनाय प्रामाणिकत्वे इत्युक्तम् । मणिकारस्य तु समानप्रकारकसिद्धेरेव प्रतिबन्धकत्वमनुगतम् । पृथिव्यामितरभेद इति साध्यविशेष्यकानुमित्यनन्तरं तदात्मकविशेषणज्ञानसहकृताद्व्यतिरेकिपरामर्शादेव पृथिवी इतरभिन्नेति पक्षविशेष्यकानुमितेरुत्पादस्य तेन व्यतिरेकिग्रन्थे वक्ष्यमाणत्वात् ।

पक्षविशेष्यिकैवे ति । तथा च विशिष्य प्रकारताविशेषं निवेश्यैव प्रतिबध्यप्रतिबन्धकभावः कल्पनीय इति भावः। तत्र तादृशानुमित्यभावस्य प्रामाणिकत्वे तूभयविधज्ञानसाधारणपक्षसाध्यवैशिष्ट्यावगाहिनिश्चयत्वस्यानतिप्रसक्तस्य सुवचत्वे उभयविधसिद्ध्योरनुगतरूपेणैव प्रतिबन्धकता; प्रतिबध्यतावच्छेदकं तु पक्षविशेष्यकसाध्यप्रकारकानुमितित्वादिकमेव, न त्वनुगतम्; पक्षविशेष्यकसाध्यप्रकारकानुमितिर्जायताम्, साध्यविशेष्यकपक्षप्रकारकानुमितिर्जायतामित्याकारिकयोरिच्छयोः पृथक्पृथगुत्तेजकत्वानुरोधात् ।

एवञ्च- साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिकत्वे च। तुल्यन्यायादिति । पर्यवसानादित्यस्य हेतुः । समानाकारकसिद्धे रिति । अन्यूनाकारकसिद्धेरित्यर्थः । [illegible] त्यादिसिद्धिदशायामपि न्यूनविषयिण्याः पर्वते वह्नि[illegible] त्पादादधिकविषयकसिद्धेरविरोधित्वे [illegible]

[ दी ] तादृशानुमितिं प्रति सिद्धिमात्रं विरोधि; साध्यप्रसिद्धिरेव वा.

---

करण्येनानुमितौ प्रतिबन्धकतालेखनस्यासङ्गतेः । अत एव जातिशक्तिवादे गोत्वत्वेन गोवृत्तित्वानुमानं सिद्धसाधनान्न सम्भवतीति अविशिष्टहेतुना विशिष्टसाध्यसाधन एव सिद्धसाधनानवकाशो न तु विशिष्टेनाविशिष्ट साधनेपीति जात्या व्यक्त्यनुमानपक्षमाक्षिप्य मिश्रा " अर्थापत्त्या वा त त्सिद्धि" रिति मूलमवतारयामासुः ।

ननु साध्यविशेष्यकानुमितिस्तावन्न सर्वत्रानुभवसिद्धा, पर्वतो वह्निमानित्याकारिकाया एवानुमितेरनुभवात् व्याप्यविशेष्यकपरामर्शादपि पक्ष विशेष्यकानुमित्युत्पादस्य परामर्शद्वयस्यानुगतरूपेण हेतुतावादिनोपि सम्मतत्वात् ; किंत्वप्रसिद्धसाध्यकस्थले विशेषणज्ञानादिविरहेण साध्य विशेषणकानुमितेरनुपपत्त्या साध्यविशेष्यकानुमितिरुरीयते , एवं च पक्ष विशेष्यकसिद्धिदशायामपि तादृशानुमितेरप्रामाणिकतया तदनभ्युपगमे क्षतिविरह इति तां प्रति पक्षसाध्यवैशिष्ट्यावगाहिज्ञानत्वेनोभयसिद्धि साधारण्येनापि प्रतिबन्धकत्वं सम्भवतीत्यभिप्रेत्य मतान्तरमाह— **तादृशानुमिति** मिति । साध्यविशेष्यकानुमितिमित्यर्थः । **सिद्धिमात्रम्**- साध्यविशेष्यिका पक्षविशेष्यिका च सिद्धिरित्यर्थः । ननु उच्छृङ्खल साध्यज्ञानदशायामपि साध्यविशेष्यकानुमितिरप्रामाणिकी , तत्र साध्य विशेषणकानुमितेरेव सम्भवादिति तादृशानुमितिप्रतिबन्धकतायां पक्षादि विषयतायाः सिषाधयिषाविरहस्य निश्चयत्वस्य च निवेशनं गौरवाये त्यभिसन्धायाह- **साध्यप्रसिद्धि**रिति । साध्यतावच्छेदकप्रकारकज्ञानमित्यर्थः। तेनेतरत्वव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्यादिपरामर्शाद्भेद त्वादिना साध्यज्ञानसत्त्वेपि पृथिव्यामितरभेद इत्याकारकानुमितेर्नानुपपत्तिः ।

न च तत्र पृथिवीतरभिन्नेत्येतादृशानुमितेस्सम्भवः, विशेषणतावच्छेदकी भूतेतरभेदत्वादिप्रकारकज्ञानविरहात् । अथेतरभेदत्वादिप्रकारकज्ञानस्य यद्वीतरभेदत्वाद्यवच्छिन्नमुख्यविशेष्यकज्ञानत्वं प्रतिबध्यतावच्छेदकम्, तदा तथाविधज्ञानदशायामितरभेदत्वाद्यवच्छिन्नपक्षकप्रमेयत्वाद्यनुमितेरप्य नुपपत्तिः; तद्धर्मावच्छिन्नविधेयकत्वस्याधिकस्य निवेशेपीतरभेदः प्रमेयः, पृथिवीतरभिन्नेत्यादिसमूहालम्बनानुमितेर्गोत्वाभावो गोत्वाभाववानित्यनुमि तेश्चानुपपत्तिः ।

अत्र केचित्;— पृथिवीतरभिन्नेत्यादिसाध्यविशेषणकानुमितौ तथा विधप्रत्यक्षादिसाधारणी विशेष्यतावच्छेदकताभिन्नप्रकारतैव; विधेयता साध्यविशेष्यकानुमितौ च ततोन्या; तथा च प्रकारताभिन्नविधेयतैव साध्यप्रसिद्धिप्रतिबध्यतावच्छेदिकेति नानुपपत्तिरित्याहुः । तन्न; प्रका रताविशेषस्य विधेयतात्वोपगमे जलभेदे तेजोभेद इत्याकारकतेजोभेदा दिसाध्यकानुमितेर्जलभेदविधेयकत्वापातात् । नचाधेयतासम्बन्धावच्छिन्न प्रकारतान्यात्वं तदिति वाच्यम्; तथासत्याधेयतासम्बन्धेन जलभेदादि साध्यकतादृशानुमितेरपि तद्विधेयकत्वानुपपत्तेः । यदि च यत्राधेयत्वं साध्यतावच्छेदकसम्बन्ध स्तत्र विधेयत्वमतिरिक्तमित्युच्यते; तदा तत्सम्ब न्धेन जलभेदसाध्यकानुमितौ प्रकारताभिन्नविधेयताशालिन्यां साध्यप्रसि द्ध्यभावव्यभिचारो दुर्वारः ।

वस्तुतस्तु तद्धर्मावच्छिन्नाप्रकारकत्वे सति तद्धर्मावच्छिन्नविधे यताकानुमितित्वमेव तद्धर्मप्रकारकज्ञानप्रतिबध्यतावच्छेदकम्; साध्य प्रसिद्धिस्थले च साध्यप्रकारिकैवानुमितिर्जायते, न तु तदप्रकारिकेति न तत्र व्यभिचारः ।

[दी] अत एव प्रसिद्धसाध्यकस्थले पक्षविशेष्यकैवानुमितिरनुभूयत इति ।

---

अतएव- साध्यविशेष्यकानुमितौ साध्यप्रसिद्धेः प्रतिबन्धकत्वादेव । **प्रसिद्धसाध्यकस्थले-** अभावरूपसाध्यप्रसिद्धिस्थले, न तु भावसाध्यकस्थल इत्यर्थः; तत्र परामर्शस्य नियमतः साध्यघटितव्याप्तिविषयकत्वात् साध्यविशेष्यकानुमितेरप्रसिद्ध्या साध्यप्रसिद्धिप्रतिबन्धकतायाः कल्पयितुमशक्यत्वात् उपष्टम्भासङ्गतेः । स्वनिरूपितप्रकारतानवच्छेदकत्वविशिष्टविषयतावच्छेदकतापर्याप्त्याश्रयत्वरूपविषयनिष्ठप्रत्यासत्त्या अनुमितिम्प्रति विषयतावच्छेदकतासम्बन्धेन ज्ञानस्य सर्वसाधारण्येन प्रतिबन्धकताया आपाततः प्रसिद्धिसम्भवेऽपि साध्याघटितव्यतिरेकव्याप्तिविषयकपरामर्शघटितसामग्र्या एव साध्यविशेष्यकानुमित्युत्पादप्रयोजकतायाः क्लृप्तत्वात्, भावसाध्यकस्थले साध्यविशेष्यकानुमितेरप्रसिद्ध्या साध्यविशेषणकानुमितेः साध्यविशेष्यकत्वे तादृशप्रतिबन्धकताया अप्रयोजकत्वादुपष्टम्भासङ्गतितादवस्थ्यात् ।

यत्तु यत्र महानसीयवह्निमात्रविषयकः परामर्शः तत्र पक्षधर्मताबलात्पर्वते पर्वतीयवह्निर्भासमानो विशेषणज्ञानविरहेण विशेष्यतयैव भासत इति भावसाध्यकस्थलेऽपि साध्यविशेष्यकानुमितिसम्भव इति; तत्तुच्छम्, सामान्यलक्षणायाः प्रत्यासत्तेरमते महानसीयवह्निविषयकपरामर्शे पर्वतीयवह्न्यभानप्रयोजकस्य दुर्लभत्वात्. न च स्मरणात्मकपरामर्शे कदाचित्तदुद्बोधकविरहात्तदसम्भवः; उद्बोधकस्य फलबलकल्प्यत्वात्; विशिष्टविशेषणबुद्धौ विशेषणज्ञानहेतुताया निर्युक्तिकत्वात् विशेषणतावच्छेदकप्रकारकज्ञानस्य चाक्षतत्वात्पार्वतीयवह्न्यविषयकपरामर्शादपि वह्नित्वेन तद्वह्निविशेषणकानुमितिसम्भवाच्च ;

इदमत्रावधेयम् । साध्यप्रसिद्धिप्रतिबन्धकतायामपि साध्यविशेष्यकानुमितित्वप्रकारकेच्छाया उत्तेजकत्वमावश्यकम्; अन्यथा पक्षविशेष्यकसिद्धिदशायां तादृशेच्छासत्त्वे अनुमित्यपलापापत्तेः. सिद्ध्यसमवहितसाध्यप्रसिद्धिदशायां साध्यविशेषणकानुमितेः सम्भवेन तत्र एकोद्देश्यतासम्बन्धनिवृत्त्यादिसम्भवे साध्यविशेष्यकानुमित्यनुपगमेऽपि न क्षतिकर इत्याशयेनैव साध्यप्रसिद्धेस्तद्विरोधित्वमुररीकृतं ग्रन्थकृता । प्रकृते च साध्यविशेषणकानुमित्युत्पादसम्भवेन तादृशानुमित्यपलापानौचित्यात् । तथा च यत्र सिद्ध्यसमवहिता साध्यप्रसिद्धिरथचानुमितिस्तत्र व्यतिरेकिपरामर्शात्साध्यविशेष्यिका तद्विशेषणिका चानुमितिरापद्येत । नचैकविधादेव परामर्शादेकदा द्विविधानुमितिरानुभाविकी, तस्माद्व्यतिरेकिपरामर्शात्साध्यप्रसिद्धिदशायामपि साध्यविशेष्यिकाया एवानुमितेः स्वीकारस्समुचितः; सिद्धिप्रतिबन्धकत्वापेक्षया साध्यप्रसिद्धिप्रतिबन्धकतायामवच्छेदकलाघवमप्यकिंचित्करमेव । व्यतिरेकिपरामर्शात्क्वचित्साध्यविशेषणकानुमितिस्वीकारे तादृशानुमितिं व्यतिरेकिलिङ्गकत्वान्वयिलिङ्गकत्वप्रकारकानुमितित्वं पृथगुत्तेजकीकृत्य सिद्धेः प्रतिबन्धकताद्वयेनैव गौरवात् ।

परे तु- अप्रसिद्धसाध्यकस्थलेऽपि साध्यविशेषणकानुमितिर्जायते; इतरभेदत्वादिरूपविशेषणतावच्छेदकप्रकारकज्ञानविरहेऽपि 'विशेष्ये विशेषणं तत्र च विशेषणान्तर' मिति न्यायेनैव पृथिव्यां इतरभेदसाध्यानुमितिसम्भवात् । न च लाघवमवकाशः, तादृशानुमितिं प्रत्येव साध्यप्रसिद्धिप्रतिबन्धकताया अवश्यकल्पनीयत्वादिति वाच्यम्; तथाविधानुमितौ यादृशी विषयता तस्याः साध्यप्रसिद्धिकालीनाविशिष्टवैशिष्ट्यावगाह्यनुमितिसाधारण्योपगमात्; साध्यविशेष्यकानुमित्यनुपगमे साध्यप्रसिद्धिप्रतिबन्धकताया एवाकल्पनात् । न च सिद्धिकाले तथाविधानुमितेर्वारणाय तत्र सिद्धेः साध्यप्रसिद्धेर्वा प्रतिबन्धकत्वकल्पनाधिक्यमावश्यक-

मिति वाच्यम् ; विशिष्टवैशिष्ट्यानुमितिस्थलीयसिद्धिप्रतिबन्धकत्वैवोप पत्तेः, इतरभेदत्वादिना इतरभेदादिविधेयकानुमितित्वस्य तत्स्थलीयप्रति बध्यतावच्छेदकस्योभयसाधारणत्वादिति ।

यत्तु विशिष्टवैशिष्ट्यानुमितौ विशिष्टवैशिष्ट्यावगाहिनी सिद्धिरेव विरोधिनी, न तु केवलं 'विशेष्ये विशेषण' मितिरीत्या जायमानापि सा तथा; तस्यास्संसर्गांशे विशिष्टनिरूपितत्वानवगाहितया न्यूनविषय कत्वात् । एवं च केवलं 'विशेष्ये विशेषण' मिति न्यायेनानु मितेरुपगमे बाहशसिद्धिदशायां तस्या वारणाय तत्र तादृशसिद्धेर्विरो धित्वकल्पनाधिक्यमावश्यकमेवेति किमपराद्धं साध्यविशेष्यकानुमितिस्वी कारेण विशिष्टवैशिष्ट्यानवगाहिसाध्यविशेषणकानुमितेरनभ्युपगमेन? प्रति बध्यप्रतिबन्धकभावसाम्यादिति; तदपि तुच्छम् ; विशिष्टनिरूपितवैशि ष्ट्यज्ञानमात्रविरोधिबाधादिकाले केवलं 'विशेष्ये विशेषण' मिति न्या येनानुमितेस्सर्वसम्मततया तादृशसिद्धेः प्रतिबन्धकताया आवश्यकत्वेन साध्यविशेष्यकानुमितिस्वीकर्तुरधिकप्रतिबन्धकताकल्पनस्य दुर्वारत्वादिति । यदि च विशिष्टप्रतियोगिकविलक्षणवैशिष्ट्यानवगाहिन्यपि विशिष्टविशेष णकज्ञाने विशिष्टविशेषणज्ञानमपेक्षितम् ; तदा तुल्ययुक्त्या विशिष्ट विशेष्यकज्ञानेपि विशिष्टविशेष्यज्ञानहेतुतया साध्यतावच्छेदकविशिष्ट विशेष्यकानुमितिरपि अप्रसिद्धसाध्यकस्थले न सम्भवति । न च विशे ष्यज्ञानस्य विशिष्टबुद्धावहेतुतया तद्विशेषस्यापि न तद्विशेषहेतुतेति वाच्यम् ; सामान्यप्रत्यासत्तिजन्यज्ञाने विशेष्यज्ञानस्य व्यभिचारेण सा- मान्यहेतुत्वासम्भवेपि तुल्यरूपोभयविशेषणावगाहिज्ञानस्याप्येकविशिष्टे अ परविशेषणकत्ववारणाय विशेषहेतुताया आवश्यकत्वात् । अन्यथा वि- शेषणज्ञानस्यापि विशिष्टबुद्धिहेतुताया उच्छेदात् । अत एव विशिष्ट वाक्यार्थविशेष्यकशब्दबोधे अवान्तरवाक्यार्थज्ञानापेक्षा । न च साध्य

[दी] अत्र च व्याप्तिस्मरणादिना पूर्वानुमितसानाशे परामर्शकाले च सिद्धिसत्त्वेऽनुमित्सान्तरोत्पत्त्यैव अनुमितिः,

---

विशेष्यकानुमितौ तुल्यरूपयोरेव पक्षविधेयतावच्छेदकयोस्साध्यांशे प्रकारता, नत्वेकविशिष्टांशे अपरस्येति न विशिष्टज्ञानापेक्षेति वाच्यम्; निर्विशेष्यतावच्छेदकानुमितेरनुभवविरुद्धत्वात् प्रत्यक्षस्य च निर्धर्मितावच्छेदकस्याप्युपगमात्, प्राथमिकाभावप्रत्यक्षे प्रतियोग्यधिकरणयोरभावविशेषणतया भानोपपत्तिः । तथा च साध्यविशेष्यकानुमितिर्निर्युक्तिकैवेति वदन्ति ।

अथ जलत्वव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्यादि परामर्शाद्भेदत्वादिरूपविशेषणज्ञानं विना स्वरूपतस्तत्प्रकारिकायाः पृथिव्यां जलभेद इत्याद्याकारिकाया अनुमितेरेव कथमुत्पत्तिरिति चेन्न; कथंचित्तत्र जलीयत्वादिमात्रपुरस्कारेणैवाभानानुमित्युपगमादिति कृतं पल्लवितेन ।

ननु सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वेपि "सन्देहवत्परामर्शपूर्व" मित्यादिग्रन्थेन सिषाधयिषापक्षतापक्षोक्तस्य व्यभिचारस्य सिद्धिकालीनानुमितिस्थले तादवस्थ्यम्, सिषाधयिषानाशे विशिष्टप्रतिबन्धकस्यानुमित्यव्यवहितप्राक्क्षणे अक्षतत्वादित्याक्षेपे यज्ञपतिसमाधानमाह– अत्रचे ति । "व्याप्तिस्मरणादी" त्यादिना अनुमित्साद्वितीयक्षणे यत्र पक्षधर्मताज्ञानं तत्स्थलीयतादृशज्ञानपरिग्रहः । पूर्वे ति । व्याप्तिस्मरणादिपूर्वकालीनेत्यर्थः । परामर्शदशायामसत्यां सिद्धौ विशेष्याभावादेव विशिष्टाभावनिर्वाहेण नानुमित्यनुपपत्तिः, अतः "परामर्शकाले च सिद्धिसत्त्व" इति । अनुमित्सान्तरे ति । परामर्शद्वितीयक्षणे तदव्यवहितप्राक्क्षणेवेत्यादिः । तदुत्पत्तिप्रकारश्चाधस्तादर्शितः । एवं च सिषाधयिषापक्षतापक्षः "सिषाधयिषाविरहेपी" त्यादिदोषादेव हेय इति भावः ।

[दी] तथैव कारणीभूतस्य विशिष्टाभावस्य सम्पत्तेरित्युपाध्यायाः । अन्ये तु द्वित्रिक्षणान्तरितायामप्यनुमित्सायामनुमितिदर्शनात् अनुमित्सा योग्यता वाच्या, सा च न स्वोत्पत्त्यनन्तरं स्वविषयसिद्ध्यनुत्पादः,

---

ननु सर्वत्र पुनरनुमित्सोत्पत्तौ मानाभाव इत्यत आह-तथैवे ति । अनुमित्सान्तरोत्पत्त्यैवेत्यर्थः । कारणीभूतस्ये ति । तथा च तादृशविशिष्टाभावात्मककारणं विना अनुमित्यनुपपत्तेरेव सिद्धिध्वंसविशिष्टाभावनिर्वाहकानुमित्सान्तरोत्पत्तौ मानमिति भावः । एतन्मत एव दीधितिकृतो निर्भरः, मिश्रादिमतस्य गौरवकवळितत्वादिति ध्येयम् ।

मिश्रमतमाह- अन्येत्वि ति । द्वित्रिक्षणान्तरितायामपी ति । द्विक्षणव्यवहितायां क्षणत्रयव्यवहितायांचेत्यर्थः । अनुमित्सायाम् - अनुमित्सोत्पत्तौ । तेनैकक्षणान्तरितायामप्यनुमित्सायां यत्रानुमितिस्तत्राप्यनुपपत्तिसत्त्वेन तदनभिधाने न्यूनता । एवं प्रथमकल्पे सिषाधयिषोत्पत्तिक्षणमारभ्य क्षणचतुष्टयात्मककालस्यैव विवक्षणीयतया त्रिक्षणान्तरितानुमित्सास्थले अनुमित्यनिर्वाहश्चेति दूषणद्वयानवकाशः । अनुमितिदर्शनात् - अनुमित्सोत्पत्तेश्चतुर्थक्षणे पञ्चमक्षणे चानुमितिदर्शनादित्यर्थः । वाच्या- सिषाधयिषापदेन विवक्षणीया । सा च- योग्यता च । स्वोत्पत्त्यनन्तर मिति । स्वप्रागभावोत्तरमित्यर्थः; स्वस्व उत्पत्तिर्यस्मादिति व्युत्पत्त्या स्वोत्पत्तिपदस्य सिषाधयिषाप्रागभावपरत्वात् । अन्यथा सिषाधयिषोत्पत्तिकाले योग्यतानुत्पत्त्या द्वितीयक्षणे अनुमित्यनिर्वाहात् । सिद्ध्यनुत्पादश्च सिद्धिप्रागभावः, तथा च स्वप्रागभावध्वंसविशिष्टस्वविषयसिद्धिप्रागभाव एवानुमित्सायोग्यतेति पर्यवसितम् । अनुमित्सापूर्वं तद्विषयीभूतसिद्ध्यनन्तरजानुमितिवारणाय वळद्वयोपादानम् । नचानागतानां यावदनुमितीनामेवानुमित्साविषयत्वसम्भवात्;

[दी] अनुमित्सोत्तरं अन्तरानुमित्यनुत्पादे दिवसादिविलम्बेनेन्द्रियादिना निर्णीतेपि साध्ये लिङ्गपरामर्शादिनानुमितिप्रसङ्गात् । किंत्वनुमित्सानन्तरं लिंगदर्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते तावानेव कालः ।

---

स्वविषयीभूतैकानुमितावुत्पन्नायामपि भाविव्यक्त्यन्तरप्रागभावमादाय योग्यताप्रसङ्ग इति वाच्यम्; स्वविषयसिद्धित्वावच्छिन्नप्रागभावस्य विवक्षितत्वात । अत एव स्वविषये त्युक्तम् । यत्किञ्चिद्विशेषध्वंसवति काले सामान्यधर्मावच्छिन्नप्रागभावासम्भवेपि सिद्धित्वावच्छिन्नप्रागभावस्य कदाप्यसत्वात् । सामान्यधर्मस्य प्रागभावप्रतियोगितावच्छेदकत्वानङ्गीकारे पुनः स्वविषयसिद्ध्यसमानकालीनत्वमेव प्रागभावविशेषणं देयम् । वह्न्यनुमितिर्घटानुमितिश्च जायतामित्यादीच्छानन्तरं घटाद्यनुमित्यादिरूपविषयसिद्धावपि वह्न्यनुमित्युत्पत्त्या सिद्धौ ति प्रकृतसाध्यपक्षवैशिष्ट्यावगाहिनिश्चयार्थकम् । अनुमित्सोत्तरं दिवसादिविलम्बेनानुमितिप्रसङ्गा दित्यन्वयः। अन्तरानुमित्युत्पादे स्वविषयसिद्धित्वावच्छिन्नप्रागभावासत्त्वेन योग्यताक्षतेर्नापत्तिसम्भव इत्यतः अन्तरानुमित्यनुत्पाद इति । द्वित्रिक्षणादिविलंबेनानुमितेरिष्टत्वात् दिवसादिविलम्बेने ति । सिद्ध्यसत्त्वे अनुमितेरिष्टत्वात् इन्द्रियादीना निर्णीत इति । लिंगेन निर्णीते साध्ये अनुमित्साविषयसिद्ध्युत्पाद एवेत्यन्तरानुमित्युत्पाद एव न सम्भवतीत्यत इन्द्रियादिने ति । आदिना शब्दादिपरिग्रहः। अनुमित्से ति। अनुमित्सोत्पत्त्यधिकरणक्षणाव्यवहितोत्तरक्षणमारभ्य क्रमेण पक्षविषयकलिंगज्ञानव्याप्तिस्मरणयोरुत्पत्तौ सत्यां उत्सर्गतो यावता कालेन परामर्शोत्पत्तिः अनुमित्सोत्पत्तिक्षणमारभ्य तत्क्षणपर्यन्तं यावन्तः क्षणाः यो वा तावदधिकक्षणानवस्थायिस्थूलकाल स्तत्समुदाय एव वेत्यर्थः । एवं च क्षणचतुष्टयं तद

[दी] फलबलेन तथा कल्पनात् ।

---

धिकक्षणावस्थायिस्थूलसमयाश्च योग्यतेति पर्यवसितम् । तदनुगमश्च स्वप्रागभावानधिकरणत्व स्वनाशाधिकरण समयध्वंसाधिकरणसमयध्वंसानधिकरणत्वोभयसम्बन्धेन लिङ्गधियिषावत्कालत्वेन, नत्वननुगतेन तत्तत्कालत्वेन; गौरवात् । तत्तत्कालोत्तेजकत्वापेक्षया तथात्वसिद्धिव्यक्तिभेदानामेव निवेशनौचित्यात् । योग्यताया उत्तेजकत्वकल्पनेऽपि वक्ष्यमाणायाः पूर्वानुमितिप्राबल्यादनुमित्युत्तरमनुमित्यापत्तेरसाङ्कर्यापाताच्च । तत्रानुमितिक्षणस्योत्तेजकताकल्पनाभावादिति विभावनीयम् । अनुमित्सोत्तरं भत्र विलम्बेन लिङ्गदर्शनादिकं ततश्च परामर्शस्तत्रानुमित्सोत्पत्तिक्षणमारभ्य परामर्शोत्पत्तिक्षणपर्यन्तावस्थायी दण्डादिरपीति तद्वारणाय लिङ्गदर्शनादेरनुमित्साक्षणाव्यवहितोत्तरक्षणोत्पत्तिकत्वमनुसरणम् । यत्रानुमित्सोत्पत्तिर्द्वितीयक्षणे पक्षलिङ्गव्याप्तिविषयकानेकस्मरणं तदनन्तरक्षणे परामर्शोत्पत्तिः तत्र क्षणत्रयमध्य एव परामर्शोत्पत्त्या तदनतिरिक्तकालमात्रस्य तथात्वभ्रमवारणाय क्रमेणे ति । अनुमित्सोत्पत्तिद्वितीयतृतीयक्षणयोर्लिङ्गदर्शनव्याप्तिस्मरणयोः क्रमेणोत्पत्तावपि कुतश्चित्प्रतिबन्धकाद्यत्र विलम्बेन परामर्शोत्पत्तिस्तत्राधिकक्षणानामपि तथात्वमतो तद्वारणायोत्सर्गत इति । तादृशव्याप्तिस्मरणानन्तरक्षणे परामर्शोत्पत्तावसति विरोधिनीत्यर्थः । अनुमित्सननुगुणक्षणव्यवधानविरहेण पञ्चमक्षणे अनुमितिरुत्पद्यते न तु तदग्रेऽपि, तथाविधक्षणव्यवधानादित्येतत्सूचनाय भङ्ग्या तादृशकालविशेषोपादानमित्यवधेयम् ।

ननु तथाविधकालस्योत्तेजकत्वे गौरवमित्यत आह—फलबलेने ति । अनुमित्सानाशेऽपि अनुमित्यात्मककार्योत्पत्त्यनुरोधेनेत्यर्थः । तथा कल्पनात् तादृशकालस्योत्तेजकत्वकल्पनात् । यत्र तथाविधपरामर्शोत्पत्तिक्षणे

[दी] अथवानुमित्सोत्पत्त्यनन्तरं अनुमित्सानाशेऽपि सिद्धौ सत्यां यावत्कालमध्येऽनुमितिर्जायते तावानेव कालोऽनुमित्सयोपलक्षितः । यदि च सिद्ध्यनन्तरं तन्नाशे द्वित्रिक्षणमध्ये विनानुमित्सामनुमित्यनुत्पादो नुभवसिद्धः तदा सिद्ध्यावधितावानेव कालः उपलक्षणीयः

---

अनुमितिप्रतिबन्धकत्वाभावादिसमवधानमासीत् तदपगमश्च तद्द्वितीयक्षणे, तत्र सिद्धौ सत्यां तदनन्तरक्षणेऽनुमितिः प्रामाणिकी, एवं यत्रानुमित्साद्वितीयक्षणे लिंगदर्शनसामग्रीसमवधानं तदनन्तरं लिंगदर्शनादिक्रमेण परामर्शोत्पत्तिः तत्र सिद्धौ सत्यामनन्तरक्षणे अनुमितिर्वा तथा तदोक्तापेक्षयाधिकस्य कालस्योत्तेजकत्वमावश्यकमित्याशयेनाह— अथवे ति । अनुमित्सोत्पत्त्यनन्तर मिति । अनुमित्सोत्पत्तिक्षणमारभ्य तदुत्तरमित्यर्थः । यावत्कालमध्ये अनुमितिर्जायते इत्यग्रेतनेनान्वयः । अनुमित्सोत्तरमनुमित्सान्तरोत्पत्त्या दिवसादिविलम्बेनापि सिद्ध्यनन्तरमनुमित्युत्पत्त्या तावत्कालस्यानुत्तेजकत्वात् । अनुमित्सानाशेपी ति । प्रागनुमित्सायामसत्त्वामित्यर्थः । असत्यां सिद्धावनुमित्सोत्तरं दिवसादिविलम्बेनाप्यनुमित्युदायत् सिद्धौसत्या मिति । प्रागित्यादिः । यावत्कालमध्ये- यावत्क्षणानन्तरक्षणे । तावानेव कालः- तावत्क्षणाक्षणानवस्थायी । अनुमित्सया — अनुमित्साधिकासिषाधयिषापदेन । उपलक्षितः- विवक्षितः । अनुमित्साया योग्यताया उत्तेजकत्ववत् तुल्ययुक्त्या सिद्धियोग्यताया अपि प्रतिबन्धकत्वमुचितमित्याशयेनाह— यदि चेति । सिद्ध्यनन्तरं ‘इव’ ति शेषः । तेन नास्य वैयर्थ्यम् । द्वित्रिक्षणमध्य इति । द्विक्षणमध्ये त्रिक्षणमध्ये वेत्यर्थः; सिद्धेश्चतुर्थक्षणे पञ्चमक्षणे वेति फलितम् । सिद्ध्या- सिद्धयर्थक पदेन । तावानेव— तन्नाशानन्तरमपि द्विक्षणस्थायी त्रिक्षणस्थायी वा । उपलक्षणीयः विवक्षणीयः ।

